पष्ठाष्टमादेस्तपसो विधाता, क्षमाभिधः श्रीनिलय धरित्र्याम्।
जीयाजितानेकपरीषहारिः, सबोधयन् भव्यगण चिरं सः ॥२७॥
भ्रातास्ति तस्य प्रथितः पृथिव्या, सद्ब्रह्मचारी **जिनदास**नामा।
तनेति तेने चरितं पवित्र, **जम्ब्वादिनाम्नो** मुनिसत्तमस्य ॥२८॥
देशे विदेशे सततं विहार, वितन्वता येन कृताः सुलोकाः।
विशुद्धसर्वज्ञ मत-प्रवीणाः, परोपकारव्रततत्परेण ॥२९॥
स ब्रह्मचारी किल **धर्मदास**स्तस्यास्तिशिष्यः कविबद्धसख्यः।
सोजन्यवल्लीजलदः कृतोयं, तद्योगतो व्याकरणप्रवीणः ॥३०॥
कविर्म**हादेव** इति प्रसिद्धस्तन्मित्रमास्ते द्विजवशरत्नम्।
महीतले नूनमसोकृत(ति)श्च साहाय्यतस्तस्य सुधर्महेतोः ॥३१॥
ग्रथः कृतोऽयं जिननाथभक्त्या गुणानुरागाच्च महामुनीनाम्।
पूर्जाभिधानाद्रहितेन नित्य(नून)महाप्रशस्तः परमार्थबुद्ध्या ॥३२॥

× × × ×

एकविंशतिप्रमाणानि शतानि च चरित्रके।
त्रिंशद्युक्तानि श्लोकाना शुभाना सति निश्चितम् ॥३७॥

इति श्रीजम्बूस्वामिचरित्रे भ० सकलकीर्तिशिष्य-ब्रह्मजिनदास-विरचिते विद्युच्चर महामुनि-सर्वार्थसिद्धिगमनो नामैकादशमः सर्गः ॥११॥

## ८. सुदर्शनचरित्र ( विद्यानंदी मुमुक्षु )

आदिभागः—

ज्ञानरत्नाब्धितारेश सर्वविद्याधिपं प्रभुं।
**आदिदेवं** नमस्यामि भव्यगजीवभास्कर ॥१॥
**चंद्रप्रभोः** द्युतिः पायात्मतामंतःप्रकाशिनी।
नित्यं करोति चद्रस्य न कृष्णो सातलोधिका ॥२॥
कर्मारातिजये शूरं वदे **शांति** शिवश्रिये।
ससारवनदावाग्नौ पतज्जीवेषु तायिनं ॥३॥

स्मरादीना विजेतारं त **वीरं** प्रणमाम्यहं ।
ज्ञानलक्ष्म्या हि भर्त्तारं निःप्रत्यूहं च **शकर** ॥४॥
शत्रूणा ये विजेतारश्चाभ्यतरनिवर्त्तिना ।
प्रणमामि **जिनान शेषान्** सर्वपापापनुत्तये ॥५॥
**सुदर्शन**मुनि वदे धीरं सद्ब्रह्मचारिणं ।
येन कर्मारिमाहत्य प्राप्तं सिद्धत्वमद्भ त ॥६॥
तनुता गुरवः सर्वे पूज्या मे शर्मसपदम् ।
सर्वविघ्नहरा वंद्यास्तुल्याः सुरनराधिपैः ॥७॥
जिनराजमुखोत्पन्ना विमला ज्ञानसपदम् ।
दायिनी **शारदां** स्तौम्यं मुहुरज्ञानहानये ॥८॥
मोहाधकारतरणिं तपस्तेजोऽनुसारिणं ।
गणेश **गौतमं** वदे सयत जगदुत्तमं ॥९॥
कवित्व-नलिनीग्राम-निबोधन-सुधाघृणि ।
वर्योर्वर्यमह वंदे **कुदकुदा**भिध मुनि ॥१०॥
यस्य यशारवेर्नष्टा कृष्णास्या बौद्धकौशिकाः ।
स्तव्येऽ**कलंकसूरिं** तं माह-मारग-कन्धरम् ॥११॥
क्रोधमारगकीलाल **जिनसेन**महाकवि ।
कुवादिहंममारग वदेऽह तद्‌गुणाप्तये ॥१२॥
आवश्यकलता कन्द-प्रमारण-घनागम ।
**रत्नकीर्ति**मह भक्त्या स्तौमि गच्छाधिप विभु ॥१३॥
परवादि-महाकक्ष्याद्वाग्णे लक्ष्मणाग्रजं ।
वागर्थमिह वंदेऽह **प्रभेन्दुं** सूरिसत्तम ॥१४॥
क्षमा-सर्वस्व-धरणि बोधबीजस्य भूमिका ।
मुनीन्द्रं गतमन्देह **पद्मनन्दि** स्तुवेऽनिशम् ॥१५॥
जीवाजीवादितत्त्वाना देशकं च गुणार्णव ।
**देवेन्द्रकीर्तिं** भक्त्याऽह मुनि नौमि मुनीश्वरम् ॥१६॥

**विद्यानन्दि**-मुनीन्द्रेण तस्य शिष्येण धीमता।
स्वस्यान्यस्योपकाराय दिने जातु मनोहर ॥१७॥
चिन्तितं मानसे श्रेयो यतिना तत्कथं भवेत्।
शुभोपदेशतोऽस्माकं पुनस्तस्य च योगतः ॥१८॥ ( युग्मं )
येन श्रुतेन भव्यानामघं याति भवार्जितं।
सुदर्शनमुनेर्वृत्तं वक्ष्येऽहं तत्समासतः ॥१९॥

**अन्तभाग :—**

योगत्रयेषु निष्णातः **विशालकीर्ति**शुद्धधीः।
श्रीकुंदकुंदसंताने बभूव मुनिसत्तमः ॥९८॥
तत्पट्टेऽजनि विख्यातः पंचाचारपवित्रधीः।
**शुभकीर्ति**मुनिश्रेष्ठः शुभकीर्तिः शुभप्रदः ॥९९॥
**धर्मचन्द्र**स्ततो **रत्नकीर्तिः** शुद्धवचोनिधिः।
**प्रभेन्दुः पद्मनन्दिश्च** ख्यातः कामाहिमर्द नः ॥१००॥
**भारतीगच्छ**पंकेज-विकाशन-दिवाकरः।
**देवेन्द्रनामकीर्त्यन्ते** कीर्त्यते लोकविश्रुतः ॥१०१॥
**विद्यानन्दि**मुनिख्यातस्तस्य शिष्यो गुणाग्रणीः।
सुदर्शनस्य तेनेदं चरितं शर्मणे कृतं ॥१०२॥
तनुता माधवः सर्वे चतुःसंघसमुद्भवाः।
मया कृति(त)मिदं शोध्यं लोके तैर्विशदाशयैः ॥१०३॥
ये लेखयंति लिखंते पठंति पाठयंति च।
सुदर्शनमुनेरेष चरित्रं ते सुखाश्नुते ॥१०४॥
यदक्षरस्वरैर्मात्राहीनं प्रमादतो इह।
तं शोध्यं शुद्धचरितैः मुनिभिः मे कृतं तथा ॥१०५॥
गान्धारपुर्यां जिननाथचैत्ये छत्रध्वजाभूषितरम्यदेशे।
कृतं चरित्रं स्वपरोपकारकृते पवित्रं हि **सुदर्शनस्य** ॥१०६॥

नित्यं नमामि तमहं जिनपार्श्वनाथं पद्मावती-धरणायक्ष-नुतं त्रिकालं ।
येनाखिलं निर्मितं किलकर्मजालं नाल त्तमो रचयितुं स्तवनं तदीयं ॥१०७॥
जिनान्तिमं नागनरेंद्रवंद्यं, श्रीवर्द्धमानं गतरागबंधं ।
अनंतातिगं सर्वगुणाबुराशि, वंदे भवाब्ध्युत्तरणैकहेतोः ॥१०८॥
पंचैते परमेष्ठिनः सुखकराः कारुण्यपूर्णाशयाः,
सार्द्धं श्रीजिनधर्म आगमयुतः सद्भव्यराशिस्तुनः ।
चैत्यं श्रीजिननायकस्य सततं चैत्यालयं मेरु(?) वै,
शश्वन्मे शरणं भवाब्धितरणं भूयाद्भवापन्नुदे ॥१०९॥

इति श्रीसुदर्शनचरित्रे पंचनमस्कारमाहात्म्यप्रदर्शके मुमुक्षुश्रीविद्यानन्दि-विरचिते सुदर्शनमहामुनिमुक्तिगमनो नाम द्वादशमः परिच्छेदः समाप्तः ।
संवत् १७७९ वर्षे शुभं भव । [ दिल्ली, धर्मपुरा, नयामन्दिर ।

## ६. सुदर्शनचरित्र ( मुमुक्षु विद्यानन्दी )

**आदिभाग :—**

नत्वा पचगुरून् भक्त्या पंचर्म गतिनायकान् ।
सुदर्शनमुनेश्चारुचरित्रं रचयाम्यहं ॥ १ ॥
येषां स्मरणमात्रेण सर्वे विघ्ना घना यथा ।
वायुना प्रलयं याति तान्स्तुवे परमेष्ठिनः ॥२॥

( इसके बाद वृषभादि चतुर्विंशतितीर्थंकरों तथा सिद्धोंका स्मरण है )

जिनेन्द्र-वदनाभोज-समुत्पन्ना सरस्वतीं ।
संस्तुवे त्रिजगन्मान्या सन्मतेव सुखप्रदा ॥१८॥
यस्याः प्रसादतो नित्यं सता बुद्धिः प्रसर्पति ।
प्रभाते पद्मनीवोच्चैस्ता स्तुवे जिनभारतीं ॥१९॥
नमामि गुणरत्नानामाकरान्-श्रुतसागरान् ।
गौतमादिगणाधीशान् संसाराम्बोधितारकान् ॥२०॥

कवित्वनलिनी-ग्राम-प्रबोधन-दिवामणिं ।
कुंदकुंदाभिधं नौमि मुनीन्द्रं महिमास्पद ॥२१॥
जिनोक्त-सप्ततत्त्वार्थसूत्रकर्ता कवीश्वरः ।
उमास्वातिमुनिर्नित्यं कुर्यान्मे ज्ञानसंपदा ॥२२॥
स्वामी **समन्तभद्राख्यो** मिथ्यातिमिरभास्करः ।
भव्यपद्मौघसस्कर्ता जीयान्मे(न्मो) भावितीर्थकृत ॥२३॥
त्रिप्रवशाऽग्रणीः सूरिः पवित्रः **पात्रकेशरी** ।
संजायाज्जिनपादाब्जसेवनैकमधुव्रतः ॥२४॥
यस्य वाक्किरणैर्नष्टा बौद्धौघाः कौशिका यथा ।
भास्करस्योदये स स्यादकलङ्कः श्रिये कविः ॥२५॥
श्रीजिनेन्द्र-मताम्भोधि-वर्द्धनैकविधूत्तमं ।
**जिनसेन** जगद्वंद्य मस्तुवे मुनिनायक ॥२६॥
मूलसंघाग्रणीर्नित्यं **रत्नकीर्तिगुरुर्महान्** ।
रत्नत्रय-पवित्रात्मा पायान्मा चरणाश्रित ॥२७॥
कुवादिमत्तमातंग-विमर्दीकरणे हरिः ।
**गुणभद्रो** गुरुर्जीयात्कवित्वकरणे प्रभुः ॥२८॥
भट्टारको जगत्पूज्यः **प्रभाचन्द्रो** गुणाकरः ।
वंद्यते स मया नित्यं भव्यराजीवभास्करः ॥२९॥
जीवाजीवादितत्त्वाना समुद्योतदिवाकर ।
वंदे **देवेन्द्रकीर्तिं** च सूरिवर्यं दयानिधि ॥३०॥
मद्‌गुरुर्योविशेषेण दीक्षालक्ष्मीप्रसादकृत् ।
तमहं भक्तितो वंदे **विद्यानन्दी** सुसेवकः ॥३१॥
**सूरिराशाधरो** जीयात् सम्यग्दृष्टिशिरोमणिः ।
श्रीजिनेन्द्रोक्त-सद्धर्म-पद्माकर-दिवामणिः ॥३२॥
इत्याप्त-भारती-साधु-संस्तुति शर्मदायिनीं ।
मंगलाय विधायोच्चैः सच्चरित्रं सता ब्रुवे ॥३३॥

तुच्छमेधोऽपि संक्षेपात् सुदर्शनमहामुनेः ।
वृत्तं विधाय पूतोस्मि सुधा-स्पर्शोपि शर्मणे ॥३४॥

इति श्रीसुदर्शनचरिते पञ्चनमस्कारमाहात्म्यप्रदर्शके मुमुक्षुश्रीविद्यानंदि-विरचिते श्रीमहावीरतीर्थकरपरमदेवसमागमाख्यवर्णनो नाम प्रथमोधिकारः !

**अन्तभाग :—**

**गांधारपुर्यां** जिननाथगेहे छत्रध्वजाद्यैः परिशोभितेऽत्र ।
कृतं चरित्रं स्वपरोपकार-कृते पवित्रं हि सुदर्शनस्य ॥४२॥
**श्रीमूलसंघे वरभारतीये गच्छे बलात्कारगणे**ऽतिरम्ये।
श्रीकुंदकुंदाख्यमुनीन्द्रवंशे जातः **प्रभाचन्द्र** महामुनीन्द्रः ॥४७
पट्टे तदीये मुनिपद्मनंदी भट्टारको भव्यसरोजभानुः ।
जातो जगत्त्रयहितो गुणरत्नसिंधुः कुर्यात्सतां सारसुखं यतीशः ॥४८॥
तत्पट्टपद्माकरभास्करोऽत्र **देवेन्द्रकीर्तिर्मुनिचक्रवर्ती** ।
तत्पादपंकेजसुभक्तियुक्तो **विद्यादिनंदी** चरितं चकार ॥४६॥
तत्पट्टे जिन**मल्लिभूषण**गुरुश्चारित्रचूडामणिः
संसाराम्बुधितारणैकचतुरश्चिन्तामणिः प्राणिना ।
सूरिश्री**श्रुतसागरो** गुणनिधिः श्री**सिंहनन्दी** गुरुः ।
सर्वे ते यतिसत्तमाः शुभतरा कुर्वन्तु वो मंगल ॥५०॥
गुरुणामुपदेशेन सच्चरित्रमिदं शुभ ।
**नेमिदत्तो** व्रती भक्त्या भावयामास शर्मदं ॥५१॥

इति श्रीसुदर्शनचरिते पंचनमस्कारमाहात्म्यप्रदर्शके ब्रह्मश्रीनेमिदत्त-विरचिते······एकदशमोधिकारः । [ जयपुर प्रति

**नोट**—१०वीं संधितक ग्रन्थकारका नाम मुमुक्षुविद्यानन्दी ही दिया है और इस ग्यारहवे अधिकारके उक्त श्लोक न० ४६ मे भी इसे विद्यानंदि-कृत सूचित किया है; परन्तु इस अन्तिम संधिमे ब्रह्मनेमिदत्तका नाम दिया है, जो चिन्तनीय है। क्या ५१वे पद्यानुसार ब्र०नेमिदत्तके द्वारा

इस ग्रन्थके भावित ('भावयामास') होनेसे ही यह नाम बादको दिया गया है ? विद्यानंदिके नामका दूसरा भी यशोधरचरित है जिसकी प्रशस्ति इससे पहले नं० ८ पर दी गई है। दोनोंमें विद्यानन्दीको गुरुपरम्परा एक है और पद्योंका कितना ही साम्य है। फिर भी दोनोंको रचनापरसे सर्वथा एक नहीं कहा जा सकता।

## १०. श्रीपालचरित्र ( श्रुतसागर )

आदिभाग :—

**अर्हतः** संस्तुवे **सिद्धान्** वंदे **निर्ग्रंथनायकान्** ।
श्रयामि **पाठकान्** सेवे **साधूनाराधये** मुदा ॥१॥
सिद्धान् जगच्छिरोरत्नप्रायान् वंदामहे सदा ।
त्रिशुद्धयै षा यदाऽध्येति मानवः श्लाघ्यते तदा ॥२॥
संसारसरितानाथ-समुत्तरण-कारणम् ।
जिनं नत्वा ब्रुवे वृत्तं श्रीपालनृपतेः शुभम् ॥३॥
( मध्यका कथाभाग गद्यात्मक है )

अन्तभाग :—

सिद्धचक्रव्रतात्मोऽयमीदृशाऽभ्युदयो बभौ ।
निःश्रेयसमितोऽस्मभ्यं ददातु स्वगति प्रभुः ॥१॥
श्री**विद्यानं**दिपादाब्जे मत्तभृंगेणाधीमता ।
**श्रुतादिसागरे**णेयं सपत्पालकथा कृता ॥२॥
इति श्रीपालनृपचरित्रं समाप्तं ।

## ११. श्रीपालचरित्र ( ब्र० नेमिदत्त )

आदिभाग :—

नत्वा श्रीमज्जिनाधीशं सुराधीशार्चितक्रमं ।
श्रीपालचरितं वक्ष्ये सिद्धचक्रार्चनोत्तमं ॥१॥

( वृषभादि २४ तीर्थंकरों, सिद्धों आदिके स्मरणके अनन्तर- )

एतेषां शर्महेतूनां चरणस्मृतिमंगलं ।
कृत्वाऽहं तुच्छबुद्धयापि श्रीपालचरितं ब्रुवे ॥२२॥
यच्चरित्रं सदासर्व्वरोगसंतापनाशनं ।
सिद्धचक्रव्रतोपेतं सिद्धौषधिमिवोत्तमं ॥२३॥
यत्पुरा रचितं पूर्वसूरिभिः श्रुतसागरैः ।
तदहं चापि वक्ष्यामि किमाश्चर्यमतः परं ॥२४॥

**अन्तभाग :—**

गच्छे श्रीमति मूलसंघतिलके सारस्वतीये शुभे ।
श्रीभट्टारकपद्मनन्दिमुनिपो देवेन्द्रकीर्तिस्ततः ॥३२॥
विद्यानन्दिगुरुस्ततो गुणनिधिः पट्टे तदीये सुधीः ।
श्रीभट्टारकमल्लिभूषणगुरुः सद्बोधसिंधुर्महान् ॥३३॥
तच्छिष्यो गुणरत्नरंजितमतिः श्रीसिंहनन्दी गुरुः
सद्रत्नत्रयमंडितोऽति नितरां भव्यौघनिस्तारकः ।
तेषां पादपयोजयुग्ममधुपः श्रीनेमिदत्तो यती
चक्रे चारुचरित्रमेतदुचितं श्रीपालजं शं क्रियात् ॥३४॥
अप्रोतोत्तमवशर्मंडनमणिः सद्ब्रह्मचारी शुभः
श्रीभट्टारक-मल्लिभूषणगुरोः पादाब्जसेवारतः ।
जीयादत्र महेन्द्रदत्तसुयती सज्ज्ञानवान्निर्मलः
सूरिः श्रीश्रुतसागरादियतिना सेवापरः सन्मतिः ॥३५॥
ख्यातं मालवदेशस्थे पूर्णाशानगरे वरे ।
श्रीमदादिजिनागारे सिद्धं शास्त्रमिदं शुभं ॥३६॥
संवत्सार्द्धसहस्रे च पचाशीतिसमुत्तरे(१५८५) ।
आषाढे शुक्लपंचम्यां संपूर्णं रविवासरे ॥३७॥

इति श्रीसिद्धचक्रपूजातिशय-प्राप्त-श्रीपालमहाराज-चरित्रे भट्टारक-

श्रीमल्लिभूषणशिष्याचार्यश्रीसिंहनंदि-ब्रह्मशान्तिदासानुमोदिते ब्रह्म-नेमिदत्त-विरचिते श्रीपालमुनीन्द्रनिर्वाणगमनवर्णनो नाम नवमो सर्गः ॥९॥

## १२. धर्मोपदेशपीयूषवर्ष ( ब्र० नेमिदत्त )

**आदिभाग :—**

श्रीसर्वज्ञं प्रणम्योच्चैः केवलज्ञानलोचनं ।
सद्धर्म्मं देशयाम्येष भव्यानां शर्महेतवे ॥१॥

**अन्तभाग :—**

इत्थं श्रीजिनभाषितं शुभतरं धर्मं जगद्योतकं
सद्रत्नत्रयलक्षणं द्वितयमं देवेन्द्रचन्द्रार्चितं ।
ये भव्या निजशक्तिभक्तिसहिताः संपालयंत्यादरात्
ते नार्का(के)द्र-नरेन्द्र-चक्रि-पदवीं भुक्त्वा शिवं यांति च ॥१६॥
गच्छे श्रीमति मूल[संघ]तिलके सारस्वतीये शुभे
विद्यानंदिगुरुप्रपट्टकमलोल्लासप्रदो भास्करः ।
श्रीमट्टारकमल्लिभूषणगुरुः सिद्धांतसिंधुर्महा-
स्तच्छिष्यो मुनिसिंहनंदिसुगुरुर्जीयात सतां भूतले ॥१७॥
तेषां पादाब्जयुग्मे निहितनिजमतिर्नेमिदत्तः स्वशक्त्या
भक्त्या शास्त्रं चकार प्रचुरसुखकरं श्रावकाचारमुच्चैः ।
नित्यं भव्यैर्विशुद्धैः सकलगुणनिधैः प्रार्थितं च मत्वा
युक्त्या सत्सेवितोऽसौ दिशतु शुभतमं मंगलं सज्जनानां ॥१८॥
लेखकानां वाचकानां पाठकानां तथैव च ।
पालकानां सुखं कुर्यान्नित्यं शास्त्रमिदं शुभं ॥१९॥

इति धर्मोपदेशपीयूषवर्षनामश्रावकाचारे भट्टारकश्रीमल्लिभूषणशिष्य-ब्रह्मनेमिदत्त-विरचिते सल्लेखनाक्रम-व्यावर्णनो नाम पंचमोऽधिकारः ।

## १३. उपदेशरत्नमाला (अ० सकलभूषण)

आदिभाग :—

वंदे श्रीवृषभं देवं दिव्यलक्षणलक्षितम् ।
प्रीणित-प्राणिसद्वर्गं युगादिपुरुषोत्तमम् ॥१॥

× × × ×

श्रीकुंदकुंदनामानं यतीशं जितमत्सरम् ।
उमास्वातिं समंतादिभद्रान्तं पूज्यपादकम् ॥१५॥
अकलंकं कलाधारं नेमिचन्द्रं मुनीश्वरम् ।
विद्यानंदं प्रभाचन्द्रं पद्मनंदिगुरुं परम् ॥१६॥
श्रीमत्सकलकीर्त्याख्यं भट्टारकशिरोमणिम् ।
भुवनादिसुकीर्त्यन्तं गच्छाधीशं गुणोद्धरम् ॥१७॥
ज्ञानभूषणनामानं ज्ञानज्ञातभवस्थितिम् ।
वरं विजयकीर्तिं च कीर्तिव्याप्तसुभूतलं ॥१८॥
शुभच्छोभाभरभ्राजमानं श्रीशुभचन्द्रकम् ।
सुबुद्धि( सुमति )कीर्तिसयुक्तं नौमि प्रारब्धसिद्धये ॥१९॥

अन्तभाग :—

श्रीमूलसंघतिलके वरनंदिसंघे गच्छे सरस्वतिसुनाम्नि जगत्प्रसिद्धे ।
श्रीकुंदकुंदगुरुपट्टपरंपरायां श्रीपद्मनंदिमुनिपः समभूज्जितात्त्वः ॥२२५॥
तत्पट्टधारी जनचित्तहारी पुराणमुख्योत्तमशास्त्रकारी ।
भट्टारकः श्रीसकलादिकीर्तिः प्रसिद्धनामाऽजनि पुण्यमूर्तिः ॥२२६॥
भुवनकीर्त्तिगुरुस्तत ऊर्जितो भुवनभासनशासनमंडनः ।
अजनि तीव्रतपश्चरणक्षमो विविधधर्मसमृद्धिसुदेशकः ॥२२७॥
श्री(सं)ज्ञानभूषेण परि(वि)भूषितांगः प्रसिद्धपाण्डित्यकलानिधानः ।
श्रीज्ञानभूषाख्यगुरुस्तदीयपट्टोदयाद्राविव भानुरासीत् ॥२२८॥
भट्टारकः श्रीविजयादिकीर्तिस्तदीयपट्टे परिलब्धकीर्तिः ।

महामना मोक्षसुखाभिलाषी बभूव जैनावनिपाश्वपादः ॥२२९॥
भट्टारकः श्रीशुभचन्द्रसूरिस्तत्पट्टपंकेरुहतिग्मरश्मिः ।
त्रैविद्यवंद्यः सकलप्रसिद्धो वादीभसिंहो जयताद्धरित्र्यां ॥२३०॥
पट्टे तस्य प्रीणितप्राणिवर्गः, शान्तो दान्तः शीलशाली सुधीमान ।
जीयात्सूरिः श्रीसुमत्यादिकीर्तिर्गच्छाधीशः कर्मकान्तिः कलावान् ॥२३१॥

तस्याभूच्च गुरुभ्राता नाम्ना सकलभूषणः ।
सूरिर्जिनमते लीनमनाः संतोषपोषकः ॥२३२॥
तेनोपदेशसद्रत्नमालासंज्ञो मनोहरः ।
कृतः कृतिजनानंद-निमित्तं ग्रथ एषकः ॥२३३॥
श्रीनेमिचन्द्राचार्यादियतीनामाग्रहात्कृतः ।
सद्वर्धमानाटोलादि-प्रार्थनातो मयैषकः ॥२३४॥
सप्तविंशत्यधिके षोडशशतवत्सरेषु(१६२७) विक्रमतः ।
श्रावणमासे शुक्ले पक्षे पष्ठ्यां कृतो ग्रन्थः ॥२३५॥
न मया ख्यातिनिमित्तं न चाभिमानेन विरचितो ग्रथः ।
धर्मरतानां गृहिणां हिताय च स्वस्य पुण्याय ॥२३६॥

× × × ×

सहस्रत्रितयं चैव त्रिशतं त्र्य(तथैवा)शीति-संयुतम् ।
अनुष्टुप्छंदसा चास्य प्रमाणं निश्चितं बुधैः ॥२४३॥

इति श्रीभट्टारक श्रीशुभचन्द्रशिष्याचार्य-श्रीसकलभूषणविरचितायामुपदेशरत्नमालायां पुण्यषट्कर्मप्रकाशिकायां तपोदानमाहात्म्य-वर्णनो नामाऽष्टादशः परिच्छेदः समाप्त ।

## १४. श्रावकाचारसारोद्धार ( मुनि पद्मनन्दी )

**आदिभाग :—**

स्व-संवेदन-सुव्यक्त-महिमानमनश्वरं ।
परमात्मानमाद्यंतविमुक्तं चिन्मयं नुमः ॥१॥

श्रीनाभेयो जिनो भूयाद्भूयसे श्रेयसे स वः ।
जगज्ज्ञानजले यस्य दधाति कमलाऽऽकृति ॥२॥
वंदारु-त्रिदशाधीश-शिरोमणि-विभार्चितं ।
यदंह्रिद्वितयं सोऽस्तु संपदे शशिलांछनः ॥३॥

अन्तभाग :—

इति श्रावकाचारसारोद्धारे श्रीपद्मनन्दिमुनिविरचिते द्वादशव्रतवर्णनो नाम तृतीयः परिच्छेदो समाप्तः ॥३॥

यस्य तीर्थकरस्येव महिमा भुवनातिगा ।
रत्नकीर्तिर्यतिः स्तुत्यः स न केषामशेषवित् ॥१॥
अहंकारस्फारी भवदमितवेदांतविबुधो-
ल्लसत्सिद्धांतश्रेणी-क्षपण-निपुणोक्तिद्युतिभरः ।
अधीती जैनेन्द्रेऽजनि रजनिनाथ-प्रतिनिधिः
प्रभाचन्द्रः सान्द्रोदयशमितापद्यतिवरः ॥२॥
महाव्रति-पुरंदरः प्रशमदग्धा(दग्धभवा)ङ्कुरः
स्फुरत्परमपौरुषस्थितिरशेषशास्त्रार्थवित् ।
यशोभर-मनोहरीकृत-समस्तविश्वंभरः
परोपकृति-तत्परो जयति पद्मनन्दीश्वरः ॥३॥
श्रीमत्प्रभेन्दुप्रभुपादसेवा-हेवाकिचेत्ताऽप्रसरत्प्रभावः ।
सच्छ्रावकाचारमुदारमेनं श्रीपद्मनन्दी रचना चकार ॥४॥
श्रीलंबकंचुककुले विततातरिक्षे, कुर्वन् स्वबाधवसरोजविकाशलक्ष्मीं ।
लुंपन् विपक्षकुमुदव्रजभूरिकातिं, गोकर्णहेलिरुदियाय लसत्प्रतापः ॥५॥
भुवि सूपकारसारं पुण्यवता येन निर्म्ममे कर्म्मा ।
भीमइव सोमदेवो गोकर्णात्सोभवत्पुत्रः ॥६॥
सती मतल्लिका तस्य यशः कुसुमवल्लिका ।
पत्नी श्रीसोमदेवस्य प्रेमा प्रेमपरायणा ॥७॥

विशुद्धयोः स्वभावेन ज्ञानलक्ष्मी जितेन्द्रियोः ।
नया इवाऽभवन् सप्तगंभीरास्तनयास्तयो. ॥८॥
**वासाधर-हरिराजौ प्रह्लादः शुद्धधीश्च महराजः ।**
**भवराजो रत्नाख्यः सतनाख्यश्चेत्यमी सप्त ॥६॥**
**वासाधर**स्याद्भुतभाग्यराशेर्मिथ्यात्वयोर्वेश्मनि कल्पवृक्षः ।
अगण्यपुण्योदयतोऽवतीर्णो वितीर्णचेतोऽभिमतार्थसार्थः ॥१०॥
**वासाधरेण** सुधिया गांभीर्याद्यदि ऋणीकृतो नाब्धिः ।
कथमन्यथा स वडवाज्वलनज्वलनसूत्रस्थितोद्वलति ॥११॥
सद्रानन्दस्वरूपाद्भुतमहिमपरब्रह्मविद्याविनोद-
व्यात्तं जैनेन्द्रपादार्च्चनविमलविधौ पात्रदानाच्च पाणि ।
वाणी सन्मंत्रजापी प्रवचनवचनाकर्णनात्कर्णयुग्मं
लोकालोकावलोकान्न विरमति यशः साधु**वासाधरस्य** ॥१२॥
शीतांशूराजहंसत्यमितकुवलयत्युल्लसत्तारकालि-
स्तिग्माशुः स्मेरक्रोत्थस्थलति जगदिदं चातरीयत्यशेष ।
जंबालत्यंतरिक्षं कनकगिरिरयं चक्रवाकत्युदग्रः
साधो**वासाधरौ**दार्यगुणनिलय यशो वारिपूरो त्वदीयः ॥१३॥
द्वितीयाप्यद्वितीयो भूद्वं योदार्यादिभिर्गुणैः ।
पुत्रः **सोमदेवस्य हरिराजा**ऽभिधः सुधीः ॥१४॥
गुणैः सदास्मप्रतिपक्षभूतैः संग करोत्येष विवेकचक्षुः ।
इतीव सेर्ष्येर्**हरिराज**साधुर्दोषैरवालोकितशीलसिंधुः ॥१५॥
संप्राप्य रत्नत्रितयैकपात्रं रत्नं सुतं मंडनमुर्व्वरायाः ।
श्री**सोमदेवः** स्वकुटुम्बभार-निर्व्वाह-चिंता-रहितो बभूव ॥१६॥
हृष्टं शिष्टजनैः सपत्नकमलैः कुत्रापि लीनं जवा-
दर्थिप्रोद्धतनीलकंठनिवहैश्छत्रं प्रमोदो हु मान् (?) ।
तृष्णाधूलिकणोत्करैर्विगलितं स्थाने मुनीन्द्रैः स्थितिं ।
वृष्टिं दानमर्थविन्वति(?) परा रत्नाकरोम्भोधरो ॥१७॥

संतोनाम्नां पत्न्या जिनराजध्यानकृत्सहरिसजः।
पुत्रं मनःसुखाख्यं धर्म्मादुत्पादयामास ॥१८॥
सति प्रभुत्वे पि मदो न यस्य रतिः परस्त्रीषु न यौवनेऽपि।
परोपकारैकनिधिः स साधुर्धर्म्मात्सुखः कस्य न माननीयः ॥१९॥
जैनेंद्राह्निसरोजभक्तिरचला बुद्धिर्विवेकाचिता
लक्ष्मीर्दीनसमर्पिता सकरुणं चेतः सुधायुग्वचः।
रूपं शीलयुत परोपकरणव्यापारनिष्ठं वपुः
शास्त्रं चापि मनःसुखे गतमदं काले कलौ दृश्यते ॥२०॥
संघभारधरो धीरः साधुर्वासाधरः सुधीः।
सिद्धये श्रावकाचारमचीकरदमु मुदा ॥२१॥
यावत्सागरमेखला वसुमती यावत्सुवर्णाचलः
स्वर्णर्धररी कुलसंकुगमित(?)...........।
चिन्तारुक(?)..........लोकप्रकाशोद्यतो
तावन्नंदतु पुत्र-पौत्रसहितो वासाधरः श्रावकः ॥२२॥
[ आमेर-प्रति

## १५. महापुराण-टीका (भ० ललितकीर्ति)

**आदिभागः—**

नत्वा श्रीमज्जिनेशानं लोकालोकप्रकाशकम्।
टीका महापुराणस्य कुर्वे स्वाभीष्टसिद्धये ॥१॥

अथ श्रीमज्जिनसेनाचार्यः श्रीमद्गुणभद्राचार्यवर्यसंसेवितपाद-पंकेरुहयुग्मो रत्नत्रयमंडितमूर्तिर्निःशेषविघ्नसमाप्त्यर्थं भगवन्नमस्क्रियारूपं मंगलमाचष्टे।.........

**अन्तभागः—**

वर्षे सागरनागभोगिकुमिते (१८७४) मार्गे च मासेऽसिते
पक्षे पक्षति-सत्तिथौ रविदिने टीका कृतेयं वरा।

काष्ठासंघवरे च माथुरवरे गच्छे गणे पुष्करे
देवः श्रीजगदादिकीर्तिरभवत्ख्यातो जितात्मा महान् ॥१॥
तच्छिष्येण च मंदतान्वितधिया भट्टारकत्वं यता
शुभद्रे ललितादिकीर्त्यभिख्या ख्यातेन लोके ध्रुवम् ।
राजच्छ्रीजिनसेनभाषितमहाकाव्यस्य भक्त्या मया
संशोध्यैव सुपठ्यता बुधजनैः द्याति विधायादरात् ॥२॥

## १६. पंचनमस्कार-दीपक (भ० सिंहनन्दि)

**आदिभाग :—**

नमाम्यर्हन्तं देवेशं लक्ष्मीरात्यंतिकी स्वयं ।
यस्य निर्धूत-कर्मेन्ध-धूमस्यापि विराजते ॥१॥

**अन्तभाग :—**

श्रीमूलसंघे वरपुष्कराख्ये गच्छे सुजातः शुभचन्द्रसूरिः ।
तस्याऽत्र पट्टेऽजनि सिंहनन्दिर्भट्टारकोऽभूद्विदुषां वरेण्यः ॥५३॥
तेनेदं रचितं ग्रंथं नाम्ना पचनमस्कृति-
दीपकं विस्तरभिया संक्षिप्तं चाल्पमेधसा ॥५४॥
अब्दैस्तत्त्वरसर्तुचंद्रकलिते (१६६७) श्रीविक्रमादित्यजे
मासे कार्तिकनामनीह धवले पक्षे शरत्संभवे ।
वारे भास्वति सिद्धनामनि तथा योगेषु पूर्णातिथौ
नक्षत्रेऽश्विनिनाम्नि तत्त्वरसिकः पूर्णीकृतो ग्रंथकः ॥५५॥
श्लोकं सहस्रगणितं वक्तुः श्रोतुः सुखप्रदं ।
ग्रन्थस्य पंचनत्याख्यदीपकस्याऽस्य तिष्ठतां ॥५६॥

इति बहुतरमपि फलविषयं पंचनमस्कारग्रन्थे संक्षिप्य पूर्णीकृतं ।

## १७. द्विसंधानकाव्य-टीका (पं० नेमिचन्द्र)

**आदिभाग :—**

श्रीमान् शिवानन्दनयीशवंद्यो भूयाद्विभूत्यै मुनिसुव्रतो वः ।
सद्धर्मसंभूतिनरेन्द्रपूज्यो भिन्नेन्द्रनीलोल्लसदंगकांतिः ॥१॥
जीयान्मृगेन्द्रो विनयेन्दुनामा संवित्सदाराजितकठपीठः ।
प्रत्तीववादीभ-कपोलभित्ति प्रमाक्षरैः स्वैर्नखरैर्विदार्य ॥२॥
तस्याथ शिष्योऽजनि देवनन्दी सद्ब्रह्मचर्यव्रत-देव-नन्दी ।
पादाम्बुजद्वंद्वमनिद्यमर्च्य तस्योत्तमांगेन नमस्करोमि ॥ ३ ॥
त्रैलोक्यकीर्तेश्चरणारविंदं पारं भवार्णोधितटीं[1] प्रणम्य ।
पिपासता राघव-पाडवीया टीका करिष्ये पदकौमदा ता ॥४॥

**अन्तभाग :—**

इति निरवद्यविद्यामण्डनमण्डित-पण्डितमण्डली-मण्डितस्य षट्तर्क-चक्रवर्तिनः श्रीमद्विनयचन्द्रपण्डितस्य गुरोरंतेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भव-चारुचातुरी-चंद्रिकाचकोरेण नेमिचन्द्रेण विरचिताया द्विसंधानकवेर्धनंजयस्य राघवपाडवीयापरनाम्नः[2] काव्यस्य 'पद-कौमुदी'नाम दधानाया टीकाया श्रीरामकृष्णयुधिष्ठराभ्युदयवर्णनं[3] नामाष्टादशः सर्गः समाप्तः ॥१८॥

## १८. ज्ञानसूर्योदय-नाटक (भ० वादिचन्द्र)

**आदिभाग :—**

अनाद्यनन्तरूपाय पञ्चवर्णात्ममूर्तये ।
अनंतमहिमाप्ताय सदोंकार नमोस्तु ते ॥१॥

---

१ 'पारे नयार्णोदधिसं' इति आरा सि० भ० प्रतौ पाठः ।
२ 'राघवपांडवीयाभिधानस्य' इति आरा सि० भ० प्रतौ पाठः ।
३ 'नायकाभ्युदय-रावण-जरासंध-वर्णनं'इति आ०सि०भ०प्रतौ पाठः ।

तस्मादभिन्नरूपस्य **वृषभस्य** जिनेशतुः ।
नत्वा तस्य पदाभोजं-भूषिताऽखिलभूतल ॥२॥
भूपीठभ्रातभूताना भूयष्ठिानंददायिनी ।
भजे भवापहा **भाषां** भवभ्रमणभंजिनी ॥३॥
येषा ग्रन्थस्य संदर्भो प्रोत्फुरीति विदा हृदि ।
ववंदे तान् गुरून् भूयो भक्तिभारनमच्छिरः ॥४॥

नाद्यते सूत्रधारः—आदिष्टोस्मि ।

ब्रह्मश्री**कमलसागर**—ब्रह्मश्री**कीर्तिसागरा**भ्या सकलागमामवारिधि-चंद्रावताराणा **सरस्वतीगच्छश्रृं**गारहाराणा श्रीमन्**मूलसंघो**द्यादिप्रकटन-प्रभाकराणा चंचच्छिखि-शिखण्डशोभितकरकमलाना त्रिविद्यविद्याचक्रवर्तिना दिगम्बरशिरोमणीना श्रीमत्**प्रभाचन्द्रसूरी**श्वराणा शिष्यैरस्मद्गुरुभिश्च श्रीम**द्वादिचन्द्रसूरि**भिर्निर्माय **ज्ञानसूर्योदयं** नामनाटक प्रदत्तमासीत् तत्सभ्याना पुरतोऽभिनेतव्यं अस्ति चाधुना सर्वेषा कुतूहललालसं चेतः । इति प्रस्तावः ।

**अन्तभाग :—**

मूलसघे समासाद्य **ज्ञानभूषं** बुधोत्तमाः ।
दुस्तरं हि भवाभोधिं सुतरि मन्वते हृदि ॥१॥
तत्पट्टामलभूषण समभवद्दैगम्बरीये मते
चंचद्बर्हकरः स भाति चतुरः श्रीमत्**प्रभाचन्द्रमाः** ।
तत्पट्टेऽजनि वादिवृन्दतिलकः श्री**वादिचन्द्रो** यति-
स्तेनायं व्यरचि प्रबोधतरणिर्भव्याब्जसंबोधनः ॥२॥
वसुवेदरसाब्जाके (१६४८) वर्षे माघे सिताष्टमी-दिवसे ।
श्रीमन्**मधूकनगरे** सिद्धोऽयं बोधसंरंभः ॥३॥ १८३॥

इति सूरिश्रीवादिचन्द्रं विरचिते ज्ञानसूर्योदयनाटके चतुर्थोऽध्यायः॥४॥

संपूर्णोयं ग्रन्थः । स्वस्ति ।

## १६. षोडशकारणव्रतोद्यापन (केशवसेन सूरि)

आदिभाग :—

श्रीमंतं धरणीश्वरार्च्चितपदं पापापहं हंसभं
हंसास्यं हरिहरसदोदयमहं स्तुत्वाषभं देवता।
भक्त्या षोडशकारणार्च्चनविधिं विद्वज्जनोल्लासकं।
कुर्वे केशवसेनसूरिरतुलश्रीधर्म्मणे सन्मणिः ॥१॥

अन्तभाग :—

दिक्संघेऽभूद्रामसेनक्रमेण श्रीमान् विद्वद्रत्नभूषो भदंतः।
चारित्राब्धो जातभानुश्चकास्ति, तत्पट्टे वै श्रीजयाद्यंतकीर्तिः ॥१३॥
वेदनंदरसचंद्रवत्सरे (१६६४) मार्गमासि सितसप्तमीविधौ(तिथौ)।
रामनामनगरे मया कृताच्चान्यपुण्यनिवहाय सूरिणा ॥१४॥
श्रीमत्केशवसेनसूरिगदिता पूजा पठंत्येव ये
शृण्वन्ति त्वथ पाठयन्ति सुनरा नार्यश्च सद्भावतः।
ये चात्रैव लिखाप्य पुस्तकमथ प्रायः सुपात्राय वै
दास्यंत्यर्थमिनप्रतापमखिलैश्वर्यं लभंतेऽन्तके ॥१५॥

इति श्रीआचार्यकेशवसेन-विरचितं षोडशकारणव्रतोद्यापनं संपूर्णं ॥

## २०. चतुर्दशीव्रतोद्यापन (अक्षयराम)

आदिभाग :—

श्रीवीरं शिरसानम्य वक्ष्ये संक्षेपतस्तरा।
चतुर्दश्युपवासानामष्टषष्ठिशतप्रमा ॥१॥

अन्तभाग :—

शास्त्राब्धेः पारगामी परममुनिरभून्मंडलाचार्य्यमुख्यः
श्रीविद्यानन्दिनामा निखिलगुणनिधिः पुण्यमूर्तिः प्रसिद्धः।

तच्छिष्यो सप्रधारी(?)विबुधजनमनोहर्षसदानदक्षो
दक्षोऽवैरामनामा विधिरमुमकरोत्पूजनाया विधेश्च ॥१॥
श्रीजयसिंहभूपस्य मंत्रिमुख्योऽग्रणीः सतां ।
श्रावकस्ताराचंद्राख्यस्तेनेदं व्रतमुद्धृतं ॥२॥
तदवसरमुद्दिश्य पूर्वशास्त्रानुवृत्तितः ।
व्रतोद्योतनमेतेन कारितं पुण्यहेतवे ॥३॥
अब्दे द्विशून्याष्टैकाके (१८००) चैत्रमासेसिते दले ।
पंचम्या च चतुर्दश्या व्रतस्योद्योतनं कृतं ॥४॥
इति प्रतिमासान्तचतुर्दशीव्रतोद्यापनविधि-पूजा-जयमाला संपूर्ण ।

## २१. त्रिभंगीसारटीका ( सोमदेवसूरि )

**आदिभाग :—**

सर्वज्ञं करुणार्णवं त्रिभुवनाधीशार्च्यपादं विभुं
यज्जीवादिपदार्थसार्थकलने लब्धप्रशसं सदा ।
तं नत्वाऽखिलमंगलास्पदमहं श्रीनेमिचन्द्र जिनं
वक्ष्ये भव्यजनप्रबोधजननी टीका सुबोधाऽभिधा ॥१॥
जिनेन्द्रवक्त्राम्बुरुहाद्विनिर्गता स्याद्वादरूपा गुणशालिनी सदा।
निरस्य जाड्यं प्रददाति या मतिं तां भारतीं नौमि परंपवित्रां ॥२॥
कर्म्मद्रुमोन्मूलनदिक्करीन्द्रं सिद्धान्तपाथोनिधिदृष्टपारं ।
षट्त्रिंशदाचार्यगुणैः प्रयुक्तं नमाम्यहं श्रीगुणभद्रसूरिं ॥३॥
या पूर्वा श्रुतटीका कर्णाट[मु]भाषया विहिता ।
लाटीयभाषया सा विरच्यते सोमदेवेन ॥४॥
अतीन्द्रियसुखप्राप्त्यै निर्मुक्तै जन्मसंततेः ।
भाविता जायते सम्यग्भावना बंधमोक्षयोः ॥५॥
प्रणिपत्य नेमिचन्द्रं वृषभाद्यान् वीरपश्चिमाञ्जिनान् सर्वान् ।
वक्ष्ये सुभाषयाऽहं विशदा टीकां त्रिभंग्याया ॥६॥

**अन्तभाग :—**

अमितगुणगणः साध्वीभदेवाभिधसोमः
विजयनिवरत्नं कामसुद्योतकारी ।
गतकलिलकलंकः सर्वदा यः स्ववृत्तः
स जयति जिनबिंबस्थापनाचार्यचार्यः(वर्यः) ॥१॥
यथाऽमरेन्द्रस्य पुलोम[जा]प्रिया नाराय[ण]स्याब्धिसुता बभूव ।
तथाभदेवस्य वैजैणिनाम्नी प्रिया सुधर्मा सुगुणा सुशीला ॥२॥
तयोः सुतः सद्गुणवान् सुवृत्तः सोमोऽभिधः कौमुदवृद्धिकारी ।
व्याघेरवालंबुनिधेः सुरत्नं जीयाच्चिरं सर्व्वजनीनवृत्ति ॥३॥
श्रीमज्जिनोक्तानि समंजसानि शास्त्राणि लेभे स यथा-मशक्त्या ।
श्रीमूलसंघाब्धिविवर्द्धनेन्दोः श्रीपूज्यपाद-प्रभुमत्प्रसादात् ॥४॥
न ज्ञातृत्वाभिमानेन न यशःप्रसरेच्छया ।
कृतिः किन्तु मदीयेयं स्वबोधायैव केवल ॥५॥
शब्दशास्त्रविरोध यत यदागमविरोधि च ।
न्यूनाधिकं च यत्प्रोक्तं शोधित तन्मनीषिभिः ॥६॥
श्रीसद्माह्नियुगे जिनस्य नितरा लीनः शिवाशाधरः ।
सोमः सद्गुणभाजनं सविनयः सत्पात्रदाने रतः ॥
सद्रत्नत्रययुक् सदा बुधमनो(जना)ह्लादी चिरं भूतले ।
नंद्यायेन विवेकिना विरचिता टीका सुबोधाभिधा ॥

इति त्रिभंगीसारटीका समाप्ता ।

## २२. यशोधरचरित्र ( भ० श्रुतसागर )

**आदिभाग :—**

विद्यानंदीश्वरं देवं नाभिराजसमुद्भवं ।
स्तुवेहं मरुदेव्यंगसंभवं वृषभं जिनं ॥१॥

अकलंकं जिनाधीशमजितं विजयात्मजं ।
जितशत्रुमहाराजनंदनं प्रणमाम्यहं ॥२॥
समंतभद्रं सर्वज्ञं स्वस्ति श्रावस्तिसंभवं ।
दृढराज-सुषेणोत्थं संभवं चिंतयाम्यहं ॥३॥
शिवकोटिप्रदं वंदे शरण्यमभिनंदनं ।
स्वयंवर-महाराज-सिद्धार्था-स्वामिनी-सुतं ॥४॥
उमास्वामिनमर्हंतं श्रयामि सुमतीश्वरं ।
श्रीमेघरथराजेंद्र-मंगलाजं सुमंगलं ॥५॥
भद्रबाहुं जगद्भद्रं भजे पद्मप्रभं विभुं ।
कौशांबी-धरणाधीश-सुसीमा-सुतनूद्भवं ॥६॥
गुप्तिगुप्तं पुरीकाशीपतिश्रीप्रतिष्ठितं ।
सुपार्श्वं पृथिवीषेणा-सुतनीलाग[भं] भजे ॥७॥
( ग्रन्थ सामने न होनेसे अगले पद्य नहीं दिये जा सके । )

अन्तभाग :—

श्रीमद्वीरजिनेन्द्र-शासन-शिरोरत्नं सतां मंडनं
साक्षाद्रत्नत्रयमोक्षकारि करुणाकृन्मूलसंघेऽभवत् ।
वंशे श्रीमत्कुंदकुंदविदुषो देवेन्द्रकीर्तिर्गुरुः
पट्टे तस्य मुमुक्षुरक्षयगुणो विद्यादिनंदीश्वरः ॥२७१॥
तत्पादपावनपयोरुहमत्तभृंगः श्रीमल्लिभूषणगुरुर्गरिमप्रधानः ।
संप्रेरितोहममुनाभयरुच्यभिख्ये भट्टारकेण चरितं श्रुतसागराख्यः ॥२७२॥
चातुर्यार्जवादिगुणवेश्म तपोनिधानं चारित्ररत्न करुणानिधिराप्तपूज्यः ।
सद्धर्ममूर्तिरिह सोपि महेन्द्रकीर्तिराचार्यवर्यविनुतो [ऽनु]मतं चकार॥२७३॥
विद्यादिनंदिगुरुपूर्वगिरा च भक्त्या ।
संप्रार्थितश्च मुनिनाऽमरकीर्तिनाम्ना ।
श्रीरत्नराज-ऋषिणा गुरुभक्तिभाजा
राजाधिराज-नत-पादकज-द्वयेन ॥२७४॥

तर्क-व्याकरणार्हत-प्रविलसत्सिद्धांतसारामल-
छंदोलंकृतिपूर्वनव्यकृतधीसंश्रव्यकाव्योच्चये ।
चंचारुधिया प्रमोदितमतिर्भूयः कृताभ्यर्थनः
साधुश्रीमतिसागरेण कृतवानेतच्चरित्र शुभं ॥२७५॥
गंधारसारनगरे सद्याभ्यर्च्चनमनेकशः शुचा(श्रुत्वा) ।
श्रुतसागरेण रचितं शास्त्रमिद सिद्धिदं भवतु ॥२७६॥

इति श्रीभट्टारकश्रीविद्यानंदि-प्रियशिष्यसूरिश्रीश्रुतसागर-विरचिते यशोधरमहाराजचरिते अभयरुच्याऽभयमति-मारदत्त-यशोमति-कल्याणमित्र-कुसुमावली-श्रीसुदत्तभट्टारक-स्वर्गगमनवर्णनं नाम चतुर्थः परिच्छेदः ।

[ आमेर-प्रति

## २३. भविष्यदत्तचरित्र ( विबुध श्रीधर )

**आदिभाग :—**

श्रीमंतं त्रिजगन्नाथं नमामि वृषभं जिनं ।
इन्द्रादिभिः सदा यस्य पादपद्मद्वयी नता ॥१॥

( आगे चन्द्रप्रभ, शान्ति, पार्श्व, महावीर आदिकी स्तुति है )

यज्जिनेन्द्रमुखोद्गीतं यद्गणेशप्रकाशितं ।
यन्मुनीन्द्रगणैर्ग्रंथ कथितं ग्रथवेदिभिः ॥८॥
श्रेमद्वेदोमयूताया(?)स्थितेन नयशालिना ।
श्रीलंबकंचुकाऽनूकनभोभूपणभानुना ॥९॥
प्रसिद्धसाधुधामैकदनुजेन दयावता ।
प्रवरोपासकाचार विचाराहितचेतसा ॥१०॥
गुरुदेवार्चनादानध्यानाध्ययनकर्मणा ।
साधुना लक्ष्मणाख्येन प्रेरितो भक्तिसंयुता ॥११॥
तदहं शक्तितो वक्ष्ये चरितं दुरितापहं ।
श्रीमद्भविष्यदत्तस्य कमलश्रीतनूभुवः ॥१२॥

समोपरोधतः संतः शृण्वंतु स्थिरमानसाः ।
निःश्रेयसाय मुचंतु खलभावं खलाह्वदः (?)॥१३॥

**अन्तभाग :—**

**चन्द्रप्रभस्य** जगतामधिपस्य तीर्थे यातेयमद्भुतकथा कविकंठभूषा ।
विस्तारिता च मुनिनाथगणैः क्रमेण ज्ञाता मयाप्यपरसूरिमुखाम्बुजेभ्यः ॥५१॥
भक्त्याऽत्र ये चरितमेतदनूनबुद्ध्या शृण्वंति संसदि पठंति च पाठयंति ।
दत्वा धन निजकरेण च लेखयति व्युद्ग्राहभावरहिताश्च लिखति संतः॥५२॥
ते भवंति बललक्षणशुद्धाः **श्रीधरामलमुखा** जनमुख्याः ।
प्राप्तचिंतितसमस्तसुखार्थाः शुभ्रकीर्तिधवलीकृतलोकाः ॥५३॥

इति श्रीभविष्यदत्तचरिते[१] विबुधश्रीधर-विरचिते साधुलक्ष्मण-नामांकिते श्रीवर्द्धन-नंदिवर्द्धन-मोक्षगमनवर्णन नाम पञ्चदशः सर्गः समाप्तः ॥

## २४. त्रिलोकसार-टीका ( सहस्रकीर्ति )

**आदिभाग :—**

यस्योक्ति-शीतलसुधारसविप्रसंगाज्जन्माग्नितापपरितापित-भव्यजीवः ।
निर्वान्ति नेमिमवनम्य मुनीन्द्रचन्द्र त्रैलोक्यसारवरवृत्तिमिह करिष्ये ॥२॥

सकलसैद्धान्तिकचक्रचूडामणि-श्रीनेमिचन्द्र भट्टारकोऽभिमतदेवता-श्री-नेमिजिननमस्कारप्रतिपादनार्थं निर्विघ्नाभिप्रेतार्थसिद्ध्यर्थं च स्वशास्त्रादौ नमस्कारमाह ।

**अन्तभाग :—**

**असापल्यां** सुधीः साधुर्वासुपूज्य-जिनालये ।
**सहस्रकीर्ति**राख्यातो नानाभव्यावबोधनः ॥१॥

---

१ इस ग्रन्थकी एक जीर्णप्रति, संवत् १४८६ आषाढ वदि ६ गुरुवार-की लिखी हुई, देहली-धर्मपुराके नया मन्दिरमें मौजूद है, जिसमें प्रारंभके दो पत्र नहीं और कुछ पत्र जीर्णोद्धार द्वारा नये भी शामिल किये गये हैं ।

सेनाकृते त्रिजगती वय-बुद्धि-वृद्धा वृत्तिर्दिगम्बरधरार्णववर्णकीर्णा।
यावज्जगद्धृतमिदं मरुतां त्रयेण तावत्सतामियमलं मुदमातनोतु ॥२॥
इति त्रैलोक्यसार-टीका समाप्ता।

## २५. धर्मपरीक्षा (रामचन्द्र मुनि)

आदिभाग :—

प्रणिपत्य जिनं भक्त्या स्याद्वादवरनायकम्।
कथा धर्मपरीक्षाख्यामभिधास्ये यथागमम् ॥१॥

अन्तभाग :—

इति श्रीरामचन्द्रेण मुनिना गुणशालिना।
ख्याता धर्मपरीक्षा सा कृता कृतिरियं ततः ॥१॥
श्रीपूज्यपादसद्वंशे जातोऽसौ मुनिपुंगवः।
पद्मनन्दी इति ख्यातो भव्यव्यूह-प्रवन्दितः ॥२॥
तच्छिष्यो रामचन्द्राख्यो भद्रश्चारुगुणान्वितः।
वेदित्वा सर्वशास्त्राणि ख्यातो धर्मरताशयः ॥३॥
स च शुद्धव्रतोपेतः समयादिविवर्जितः।
समयः सर्वसत्त्वानां तत्प्रार्थनवशाद्वरः ॥४॥
यावद्व्योम्नि प्रवर्त्तन्ते शशाकरवितारकाः।
तावद्धर्मपरीक्षेयं वर्तिष्यति सदाशये ॥५॥
पद्मनिधाम्मभूता हि कथा पद्मायनी वरा।
तथा धर्मपरीक्षा च मिथ्यात्वाज्ञानवमिनी ॥६॥
इति धर्मपरीक्षाकथा समाप्ता।

## २६. करकण्डुचरित्र (भ० जिनेन्द्रभूषण)

आदिभाग :—

पार्श्वनाथजिनं वन्दे विश्वविघ्नौघनाशनम्।
कमठोपसर्ग-दैत्यारि-नाशनं सौख्य-कारणम् ॥१॥

**अन्तभाग :—**

वक्तुं सर्वमिह क्षमः किल भवेत्कस्योत्तमा भारती ॥१५॥

इति श्रीमुमुक्षु-सिद्धान्तचक्रवर्ति-श्रीकुन्दकुन्दाचार्यानुक्रमेण श्रीभट्टारक-शिवभूषण-विरचिते श्रीमज्जिनेन्द्रपुराणान्तर्गत-भगवत्पूजाफल-व्यावर्णने श्रीकरकण्डु-सहस्रारकान्तिवर्णनो नाम चतुर्थोधिकारः सम्पूर्णः।

करकण्डुकथा सम्पूर्णा।

## २७. अनन्तजिन-व्रतपूजा ( भ० गुणचन्द्र )

**आदिभाग :—**

श्रीसर्वज्ञं नमस्कृत्य सिद्धं साधूंस्त्रिधा पुनः।
अनन्तव्रतमुख्यस्य पूजां कुर्वे यथाक्रमम् ॥१॥

**अन्तभाग :—**

इत्यनन्तविधेः पूजा व्यरचद्गुणचंद्रकः।
श्लोकः सप्तशती पञ्चसप्तत्यूना यतीश्वरः ॥१॥
संवत्षोडशत्रिशत्रैष्यफलके(१६३३) पक्षेऽवदाते तिथौ
पञ्चम्या गुरुवासरे पुरुजिनेट्-श्रीशाकमार्गे पुरे।
श्रीमद्हुम्बडवशपद्मसविता हर्षाख्यदुर्गो वणिक्
सोयं कारितवाननंतजिनसत्पूजां वरे वाग्वरे ॥२॥

श्रीमूलसंघेऽविद्यातिनीह प्रद्योतमानेऽन्यमतानि नेशुः।
सारस्वतो गच्छ इहैव नद्यात् श्रीमद्बलात्कारगणाभियुक्ते ॥३॥
श्रीरत्नकीर्तिभगवज्जगता वरेण्यश्चारित्ररत्ननिवहस्य बभार भारम्।
तद्दीक्षितो यतिवरो यशकीर्तिकीर्तिश्चारित्ररंजितजनोद्वहिता सुकीर्तिः ॥४॥

तच्छिष्यो गुणचंद्रसूरिरभवच्चारित्रचेतोहर-
स्तेनेदं वरपूजनं जिनवरानन्तस्य युक्त्याऽरचि।
येऽत्र ज्ञानविकारिणो यतिवरास्तैः शोध्यमेतद्ध्रुवं
नंद्यादारविचंद्रमक्षयतरं संघस्य मांगल्यकृत् ॥५॥

इत्याचार्यगुणचंद्रविरचिता श्रीअनन्तनाथजिनपूजा उद्यापनसहिता समाप्ता।

## २८. पद्मपुराण ( भ० धर्मकीर्ति )

**आदिभाग :—**

शक्राली-मौलि-रत्नांशु-वारिधौत-पदाम्बुजं।
ज्ञानादिर्महिमव्यामविष्टपं विष्टपाधिपं ॥१॥
मुनिसुव्रतनामानं सुव्रताराधितक्रमं।
वंदे भक्तिभरानम्रः श्रेयसे श्रेयसि स्थितं ॥२॥

**अन्तभाग :—**

अथाभवन्मूलसुसंघ एव गच्छे सरस्वत्यधिके(भिधे) गणे च।
बलात्कृतौ श्रीमुनिपद्मनन्दी श्रीकुंदकुंदान्वयजप्रसूतिः ॥२४॥
देवेन्द्रकीर्तिश्च बभूव तस्य पट्टे महिष्टे सुमहानुभावः।
त्रिलोककीर्तिस्तत तत्र(एव) दीप्तो भट्टारकस्तत्पदलब्धनिष्ठः ॥२५॥
सहस्रकीर्तिर्मुनिवृन्दसेव्यस्तत्पट्टपाथोधिनिशाधिनाथः।
तदीयशिष्यः पद-पद्मनन्दी बभूव नाम्ना मुनिपद्मनन्दी ॥२६॥
पट्टे तदीयेऽखिलसंघसेव्यो यशःसुकीर्तिः शुभकीर्तिसिंधुः।
बभूव भट्टारक-सत्पदस्थो मुनिः स्मरारेः हनने प्रवीणः ॥२७॥
तत्पट्टपंकेजविकाशनेयः साम्यं विभर्त्तीह सहस्रभानोः।
हतस्मरार्जितदुःकषायो(?) विनष्टदुर्भावचयो महात्मा ॥२८॥
यं वीक्ष्य लोके व्रतभासुराग तपस्विन शास्त्रविदं मुनीशं।
भजति मिथ्यात्वचय न जातु क्रियापरं शीलनिधिं सुशातं ॥२९॥
य सेवमाना सतत सुशिष्या विज्ञात-तत्त्व-व्रत-भासुरागाः।
भवति नूनं जगती-प्रकाशास्तपःकृशांगा गविणो गुणौघैः ॥३०॥
यं सेवमानः समकुलिजातं मुनीशमासीदुद्धररत्नपालः।
पटुत्व-वाग्मित्व-कवित्व-वेत्ता ··· ··· सद्गुणरत्नपात्र ॥३१॥
एवं विधोऽसौ मुनिसंघसेव्यो भट्टारको भासितदिक्समूहः।
संघस्य कल्याणकृतिः प्रदेया नाम्ना गुरुः श्रीललितादिकीर्तिः ॥३२॥

तच्छिष्यस्तत्पदस्थो व्रतनिचययुतो जैनपादाब्जभृंगो
नाम्ना धर्मादिकीर्तिर्मुनिविमलमनास्तेन चैतत्पुराणं।
स्वल्पप्रज्ञेन दृब्धं निजदुरितचय-प्रक्षयाय हिताय
भव्याना च परेषा श्रवण-मुपठने प्रोद्यतानामजस्रं ॥३३॥
मूलकर्ता पुराणस्य श्रीजिनश्चोत्तरस्तथा।
गणीशो यतयोन्ये च उत्तरोत्तरकर्तृकाः ॥३४॥
इदं श्रीरविषेणस्य पुराण वीक्ष्य निर्मितः।
चिरं स्थेयात् क्षितौ भव्यैः श्रुतं चाधीतमन्वह ॥३५॥
संवत्सरे द्व्यष्टशते मनोज्ञे चैकोनसप्तत्यधिके(१६६६) सुमासे।
श्रीश्रावणे सूर्यदिने तृतीयातिथौ च देशेषु हि मालवेषु ॥३६॥

× × × ×

इति श्रीपद्मपुराणे भट्टारकश्रीधर्मकीर्तिविरचिते पद्मदेवनिर्वाणगमनं नाम चतुश्चत्वारिंशः पर्वः ॥४४॥

## २६. हरिवंशपुराण (भ० धर्मकीर्ति)

**आदिभाग :—**

श्रीमंतं त्रिजगन्नाथ नेमिनाथं जिनाधिपम्।
अरिष्टखंडने नेमि वन्देऽनन्तगुणार्णवम् ॥१॥
पुरुदेवादि-वीरान्तान शेषांस्तीर्थकरान्मुदा।
वन्देऽनन्तगुणालीढान्प्रातिहार्यादिभूषितान् ॥२॥
सप्तत्यग्रशतक्षेत्र्यान्सतो भूतान्भविष्यतः।
नमामि श्रीजिनान घातिकर्मसंघातघातकान् ॥३॥
सिद्धानष्टगुणोपेतान्पचाचारादिसंगतान्।
आचार्यान्पाठकान्वंदे तथासाधूंस्तपोधनान् ॥४॥
जिनेन्द्र-वक्त्र-संजाता सुरासुरमुनीडिताम्।
भारतीं नौमि दुर्जाड्य-नाशिनीं विश्वदीपिकाम् ॥५॥

वन्दे **वृषभसेनादीन्** **गौतमान्तान्** गणेशिनः ।
चतुर्ज्ञानधरान्सम्यक् पूर्वाङ्ग-रचनोद्यतान् ॥६॥
**कुन्दकुन्दादिकाचार्यान्** कवीन्द्रान्नौमि भक्तितः ।
प्रदीपायितमेतत्र (?) यैर्मिथ्यात्वतमोवृते ॥७॥
तथा **ललितकीर्त्याख्यमीडे** भट्टारकं गुरुम् ।
क्रियते यत्प्रसादेन कृतिरेषा बुधोचिता ॥८॥

**अन्तभाग :—**

**वीरेणोक्त** पुरा चैत**द्गौतमाद्यै**स्ततोऽखिलम् ।
**श्रुतकेवलिभिस्तद्वत्ततः श्रीगुणभद्रकैः** ॥६०॥
सक्षेपेण च तद्वीक्ष्य प्रोक्तं तच्च मया पुनः ।
उत्क्रमेतच्चिरं नद्यात्पठितं पाठित बुधैः ॥६१॥

नानाकथातत्त्वरहस्यपूर्णं पूजाव्रतत्याग-तपोगुणाढ्यम् ।
स्वर्गोपवर्गोरुनिदानभूत पुराणमेतत्सुचिर प्रजीयात् ॥६२॥
**श्रीमूलसंघे**ऽजनि **कुन्दकुन्दः** सूरिर्महात्माखिलतत्त्ववेदी ।
**सीमधरस्वामि**पदप्रवन्दी पञ्चाह्वयो जैन-मत-प्रदीपः ॥६३॥
तदन्वयेऽभू**द्यशकीर्ति**नामा भट्टारको भाषितजैनमार्गः ।
तत्पट्टवान् श्री**ललितादिकीर्ति**र्भट्टारकोऽजायत सत्क्रियावान् ॥६४॥

जयति **ललितकीर्ति**र्ज्ञाततत्त्वार्थसार्थो
नय-विनय-विवेक-प्रोज्वलो भव्यबन्धुः ।
जनपदशतमुख्ये **मालवे**ऽल यदाज्ञा
समभवदिह जैन-द्योतिका दीपिकेव ॥६५॥
तत्पट्टाम्बुजहर्ष-वर्ष-तरणिर्भट्टारको भासुरो
जैनग्रन्थविचार-केलिनिपुणः श्री**धर्मकीर्त्याह्वयः** ।
तेनेद रचितं पुराणममलं गुर्वाज्ञया किञ्चन
संक्षेपेण विबुद्धिनापि सुहृदा तच्छोध्यमेतद् ध्रुवम् ॥६६॥

यशोलाभाभिमानार्थं न ग्रन्थोऽयं कृतो मया ।
स्वश्रेयसे तथान्येषामुपकाराय केवलम् ॥६७॥
एतद्ग्रन्थकृते वाञ्छे फलं कर्मक्षयं ध्रुवं ।
ततः संसारवाराब्धिः सुतरो मे भविष्यति ॥६८॥
हीनाधिकमभूत्किञ्चिद्यदिह विदुषावरैः-
स्तच्छोध्य कृपया तत्र हास्यः कार्यो न मे मनाक् ॥६६॥
को हेयो विदुषामनादृतिरथ कः पोषणीयोऽपि कः ।
को मासो गदितश्च का वरनदी किं पाठनीयं पुरा ॥
निद्रा का महता तथा जिनपतेः का पूजनीया मुदा ।
ज्ञातव्यस्त्रिकवर्णनामसुगतैर्मध्याक्षरैर्ग्रंथकृत् ॥१००॥

अधमः । कार्मणः । स्वकीयः । कार्तिक । यमुना । गणित । विकृतिः । प्रतिमा । धर्मकीर्तिमुनिकृति ।

वर्षे द्व्यष्टशते चैकाग्रसप्तत्यधिके(१६७१) रवौ ।
आश्विने कृष्णपचम्या ग्रन्थोऽय रचितो मया ॥१०१॥

## ३०. हरिवंसपुराण (पं० रामचन्द्र)

**आदिभाग :—**

श्रीमते नेमिनाथाय केवलज्ञानमूर्तये ।
स्याद्वादवादिने नित्यं नमोस्तु भवहारिणे ॥१॥
यल्लोकेन्द्रानलं नेमिं प्रह्वीकृत्य गुणार्णवम् ।
हरिवंशपुराणस्य समासो वर्ण्यते मया ॥२॥
जिनसेन-समुद्रस्य पारं गन्तुं न पार्यते ।
भव्यैः कालप्रभावेन तदर्थं-श्रुति-सुन्दरः ॥३॥
लम्बकंचुकवंशेऽसौ जातो जन-मनोहरः ।
शोभनाङ्गी सुभगाख्यो देवकी यस्य वल्लभा ॥४॥

तदात्मजः कलावेदी विश्वगुणविभूषितः ।
**रामचन्द्राभिधः** श्रेष्ठी **मल्हणा** वनिता प्रिया ॥५॥
तत्सूनुर्जनविख्यातः शीलपूजाद्यलंकृतः ।
**अभिमन्युर्**महादानी तत्प्रार्थनवशादसौ ॥६॥
शृण्वन्ति य इदं भक्त्या भव्याः सुकृतमूर्तयः ।
प्राप्नुवन्ति महाभोगान्तपो(तो)ऽपवर्गमच्युतम् ॥७॥
चारुवाक्यप्रबोधेन कथा सकलनात्मना ।
प्रोच्यते **जिनसेनेन** शृण्वन्तु भुवि कोविदः ॥८॥

**अन्तभाग :—**

यादवान्वय-विभूषिणी-भुवा दान-पूजन-विनोद-चेतसा ।
कारितेयम**भिमन्युना** मुदा सान्वयश्रवणहेतुका कथा ॥३॥
यदुक्तं **जिनसेनेन** सूरिणा भव्यबंधुना ।
तन्मया **रामचन्द्रेण** संक्षेपेणैव भाषितम् ॥४॥
यावद्रत्नाकरो लोके यावन्मेरुधुरीशिता ।
तावदयं समासो हि तिष्ठता महदाशये ॥५॥

इति श्रीहरिवंशपुराणसमासे अभिमन्युश्रेष्ठिनामाकिते नेमिनाथ-परिनिर्वाणवर्णनं पंचमाऽधिकरणं समाप्तं ॥

## ३१. जयपुराण (ब्रह्म कामराज)

**आदिभाग :**

श्रीमन्तं श्री(त्रि)जगन्नाथं वृषभं नृसुरार्चितम् ।
भव-भीति-निहन्तारं वन्दे नित्यं शिवाप्तये ॥१॥

**अन्तभाग :—**

प्रकथ्यतेऽन्वयोऽथात्र ग्रंथकृद्ग्रंथभक्तयः ।
**मूलसंघे** वरे बीरपारंपर्याच्चतुर्गुणे ॥७९॥

अभूद्गणो **बलात्कारः पद्मनन्द्यादि**पंचसु।
नामास्मिन् च मुनिग्रावशारदाबलवाचकात् ॥८०॥
आचार्यात्कुन्दकुन्दाख्यात्तस्मादनुक्रमादभूत्।
स **सकलकीर्तियोगीशो** ज्ञानी भट्टारकेश्वरः ॥८१॥
येनो[द्]धृतो गतो धर्मो गुर्जरे वाग्वरादिके।
**निर्ग्रंथेन** कवित्वादिगुणेनैवार्हता पुरा ॥८२॥
तस्माद्**भुवनकीर्तिः श्रीज्ञानभूषणयो**गिराट्।
**विजयकीर्त**योऽभूवन् भट्टारकपदेशिनः ॥८३॥
तेभ्यः **श्रीशुभचन्द्रः श्रीसुमतिकीर्ति**संयमी।
**गुणकीर्त्या**ह्वया आसन् बलात्कारगणेश्वराः ॥८४॥
ततः श्री**गुणकीर्ते**र्यः पट्ट-व्योमदिवाकरः।
वादिना भूषणो भट्टारकोऽभू**द्वादिभूषणः** ॥८५॥
तत्पट्टाधीश्वरो विश्वव्यापिनिश्वेतकीर्तिधृत्।
**रामकीर्ति**रभूदन्य[द्]रामो वा सुखदैर्गुणैः ॥८६॥
तस्मात्स्वगच्छपतिरस्ति स **पद्मनन्दी** निष्णातकोकमुखकारकपद्मनंदी।
भट्टारको जिनमताम्बर-पद्मनंदी श्री**रामकीर्ति**पदभूधर-पद्मनंदी ॥८७॥
यः शब्दतर्कपरमागमविद्विरागी रागी शिवे विहित-सर्वतपःसमूहः।
भात्यत्र वस्त्रपरिवर्जन-जातरूपः काले कलौ परिहृताखिलवस्तुलोभः ॥८८॥
वस्त्राणा त्यजनक्षणेऽस्य यतिनो वंशादिवालस्यविद्-
धृत्वाग्रे **समरादिसिंह**नृपतिः खङ्गं पुरस्येति सः।
प्राहाऽसि प्रवितीर्य मा मुनिवर त्व चाम्बराणि प्रभो
राजन्यं कुरु संप्रगृह्य स तदा स्वाङ्गीकृतान्नाचलत् ॥८९॥
गिरिपुराधिपतिर्नृपपुंगवस्तमभिवीक्ष्यमुदोल्लसते प्रभुः।
गिरिधरादिमदाससमाह्वयः जलधिरम्बुचयेन विधुं यथा ॥९०॥
तदुपदेशवशेन तदीयसत्प्रवरपुण्यभराकृतसाहसं।
जयपुराणमिदं तनुबुद्धिना रचितमंगजनाथसुवर्णिना ॥९१॥

**नागभ्रवंश**भव-पडित**जीवराज**-मेधाबलात्सकलमौख्यकरकृतोयं ।
जैनालयः स्थपति-बुद्धिभरादपूर्वो ग्रंथानु वा जयभृतो जिनदर्शनोर्व्यं(?)॥६२
भट्टारकस्य गुरुबन्धुरभूत्प्रसिद्धो मेधावतः **सुमतिकीर्तिमुनेर्गुणाद्यः** ।
आचार्यमुख्य**सकलादिभूषणा**ख्यस्तच्छिष्यसूरिरभवत्स**नरेन्द्रकीर्तिः**॥६३
पूर्णस्य वक्तृकवितादिगुणैरदभ्रैः शिष्यो बभूव नृपमान्यनरेन्द्रकीर्तेः ।
वर्णीस्मराभवपुपः **सहिलाद्रकाख्यः** शिष्योस्ति तस्य जयसेवक**कामराजः**॥६४

मात्रा-संधि-विभक्ति-लिङ्ग-वचनालकार-रीत्यादिभिः
प्रोक्तं यद्रहितं सरस्वति मया ग्रंथेत्र सूरीश्वरैः ।
निर्वाच्यो चिदभावतः क्षम मयि त्व तद्धिते बालके
मातेवास्फुटवाग्रतं शिवकरा तारुण्यकालाद्रुतं(?)॥६५॥
दुःसंध्यादिमल विनाश्य गुणिनः सवीक्ष्य यूय बुधा
हर्षतः कविचिल्लवं कुरुत भो ग्रथद्रह स्वात्मनि ।
शुद्धं सज्जनतागुणादुदमिवाकृतादिनैर्मल्यद
गभीरं पृथुल त्रिवर्गसलिल पंक शरद्वाशराः(?)॥६६॥

भूयात्पुराणरचनाभवपुण्यतो मे सम्यक्पदेन सहितो भवमोख्यवर्गात् ।
अन्योरथकर्मजनकाद्विमुखस्य दृक्चिद्यारित्ररत्ननिचयो न हितस्वतोन्यः॥६७॥

अमृतवार्द्धिखभूमिसुदर्शना विजयनामनगाचलमंदिर(?) ।
चपलरूकसमूहैः सहिता दुमे(?) जयतु यावदिदं भुवनत्रये ॥६८॥
शिल्पिरुत्पादयत्येव जिनबिम्ब तथा कविः ।
शास्त्रं तन्मान्यतामेति मान्यं तन्मानितं जनैः ॥६९॥

राष्ट्रस्यैतत्पुराण शकमनुजपते**र्मेदपाटस्य** पुर्या
पश्चात्संवत्सरस्य प्रराचितमटतः **पंचपंचाशतो** हि ।
**अभ्राभ्रात्रैकसंवत्सर निकरयुजः(१५५५)** फाल्गुणे मासि पूर्णे
मुख्यायामौदयाया सुकविविनयिनो **लालजिष्णोश्च** वाक्यात्॥१००॥
**सकलकीर्तिकृतं पुरुदेवजं** समवलोक्य पुराणमियं कृतिः ।
**जयमुनेर्गुणपालसुतस्य च बृहदलं जिनसेनकृतं** कृता ॥१०१॥

इति श्रीजयाङ्के जयनाम्नि पुराणे भट्टारक-श्रीपद्मनंदि-गुरूपदेशाद्ब्रह्म-कामराजविरचिते पंडितजीवराजसाहाय्यात् त्रयोदशमः सर्गः।

## ३२. कार्तिकेयानुप्रेक्षा-टीका ( भ० शुभचन्द्र )

**आदिभाग :—**

शुभचंद्रं जिनं नत्वाऽनंतानतगुणार्णवम्।
कार्तिकेयानुप्रेक्षाष्टीकां वक्ष्ये शुभश्रिये ॥१॥

**अन्तभाग :—**

श्रीमूलसंघेऽजनि नन्दिसंघो वरो बलात्कारगणः प्रसिद्धः।
श्रीकुंदकुंदो वरसूरिवर्यो विभाति भाभूषणभूषितांगः ॥२॥
तदन्वये श्रीमुनिपद्मनन्दी ततोऽभवच्छ्रीसकलादिकीर्तिः।
तत्पट्टधारी भुवनादिकीर्तिः श्रीज्ञानभूपो वरचित्तभूषः ॥३॥
तदन्वये श्रीविजयादिकीर्तिस्तत्पट्टधारी शुभचंद्रदेवः।
तेनेयमाकारि विशुद्धटीका श्रीमत्सुमत्यादि-सुकीर्तिकीर्तेः ॥४॥
सूरिश्रीशुभचन्द्रेण वादि-पर्वत-वज्रिणा।
त्रिविद्येनानुप्रेक्षाया वृत्तिर्विरचिता वरा ॥५॥
श्रीमद्विक्रमभूपतेः परिमिते वर्षे शते षोडशे
माघे मासि दशाग्रवन्हिसहिते(१६१३) ख्याते दशम्यां तिथौ।
श्रीमच्छ्रीमहिसार-सारनगरे चैत्यालये श्रीगुरोः
श्रीमच्छ्रीशुभचंद्रदेव-विहिता टीका सदा नन्दतु ॥६॥
वर्णिश्रीक्षेमचंद्रेण विनयेन कृतप्रार्थना।
शुभचद्रगुरो स्वामिन् कुरु टीका मनोहरा ॥७॥
तेन श्री शुभचन्द्रेण त्रैविद्येन गणेशिना।
कार्तिकेयानुप्रेक्षाया वृत्तिर्विरचिता वरा ॥८॥
तथा साधुसुमत्यादिकीर्तिना कृतप्रार्थना।
सार्थीकृता समर्थेन शुभचन्द्रेण सूरिणा ॥९॥

**भट्टारक**-पदाधीशा **मूलसंघे** विदावराः ।
**रमा-वीरेन्दु-चिद्रूप-**गुरवो हि गणेशिनः ॥१०॥
**लक्ष्मीचद्र**गुरुः स्वामी शिष्यस्तस्य **सुधीयशाः** ।
वृत्तिर्विस्तारिता तेन श्री**शुभेन्दु**प्रसादतः ॥११॥

इति स्वामिकार्तिकेयानुप्रेक्षा-टीकायां त्रैविद्यविद्याधर-षड्भाषाकवि-चक्रवर्तिभट्टारकश्रीशुभचद्र-विरचितायां धर्मानुप्रेक्षायां द्वादशोऽधिकारः ॥

## ३३. चन्द्रप्रभचरित ( भ० शुभचन्द्र )

**आदिभाग :—**

श्रीवृष **वृषभं** वन्दे वृषदं वृषभाङ्कित ।
वृषभादिसमाश्लिष्ट-पादद्वितयपकजं ॥१॥

( इसके आगे चन्द्रप्रभादिकी स्तुतिके आठ पद्य हैं। )

ज्ञानभूषान **जिनान् शेषान्** सदर्थप्रतिपादकान् ।
मुक्तयङ्गनासमाश्लिष्टानीडेऽनन्तसुशर्मणे ॥१०॥
सप्तभगीविधि प्राप्ता गां **जैनीं** वैष्णवी[१] स्तुवे ।
यस्य प्रसादतः सर्वे बोबुध्यन्ते जनाः समे ॥११॥
**गुरू**नखिलसन्मार्ग-द्योतकान् ज्ञानभूषणान् ।
विजये कीर्तिसंप्राप्तास्तोष्टुवीमि स्वसिद्धये ॥१२॥
**जिनसेना**दयः पूर्वसूरयः सूरसन्निभाः ।
मया संस्ते शिवं दद्युः परमात्मध्यानवेदिन. ॥१३॥
तदध्वनि विवक्षामो गंतु शक्तिविवर्जिताः ।
स्थाने तत्सूरसंद्योत्ये मार्गे गच्छंति तारकाः ॥१४॥

**अन्तभाग :—**

श्री**मूलसंघे**ऽजनि **पद्मनन्दी** तत्पट्टधारी **सकलादिकीर्तिः** ।
तत्पट्टधारी **भुवनादिकीर्ति**र्जीयाच्चिरं धर्मधुरीणदक्षः ॥५६॥

---

१ व्यापनशीला ।

तत्पट्टेऽजनि बोधबुद्धिर्निखिलन्यायादिशास्त्रार्थक-
श्चिद्रूपामृतपानलालसमतिः श्रीज्ञानभूषो जयी।
जीयात् पंचमकालकल्पशिखरी तत्पट्टधारी चिरं
श्रामञ्छीविजयादिकीर्तिमुनिपो जीयाच्च शास्त्रार्थवित् ॥५७॥
सोमप्रभः सोमसमानतेजाः श्रीसोमसल्लाञ्छन इद्धकांतिः।
सोमः सुमूर्तिश्च करोतु साम्यं श्रीशोभचन्द्रस्य सुयोगिनः सः ॥५८॥
यः सञ्शृणोति भजते निखिलं चरित्रं
यः कामयति प्रथयतीन्दुनिभस्य भावात्।
यः पाठयन् पठयति जिनभक्तिरागात्
स सिद्धिभीरुमुखपंकजमश्नुते हि ॥५ ॥
श्लोकाः षष्ठ्यधिकाः सर्वे शतपञ्चदशामलाः।
प्रमाणमस्य विज्ञेयं लेखकैः पाठकैः सदा ॥६०॥

इति श्रीचन्द्रप्रभचरिते भट्टारकश्रीशुभचन्द्रविरचिते भगवतो निर्वाण-गमनो नाम दशमो सर्गः।

## ३४. पार्श्वकाव्य-पंजिका ( भ० शुभचन्द्र )

**आदिभाग :—**

श्रीपार्श्वं पार्श्वमानम्य सुपार्श्व-निहितोत्तमम्।
पद-वैषम्य-संभेत्री वक्ष्ये तत्काव्यपंजिकाम् ॥१॥

**अन्तभाग :—**

श्रीमूलसंघेऽजनि नन्दिसंघस्तत्राभवच्छ्रीसकलादिकीर्तिः।
शास्त्रार्थकारी खलु तस्य पट्टे भट्टारकः श्रीभुवनादिकीर्तिः ॥१॥
तत्पट्टोदयपर्वते रविरभूत् श्रीज्ञानभूषो यतिः
मिथ्यामार्ग[महा]न्धकारतरणिश्चारित्रचूडामणिः।
सम्यक्स्वीकृतशास्त्रसद्व्रतभरः सच्छामलीलायुतः
पायाद्वो भवदुःखतस्त्रिजगति प्रख्याततनामा मुनिः ॥२॥

प्रकटतत्पदपंकजभानुमान् सकलतार्किकवंदितपद्युगः ।
विजयकीर्ति[गुणी] गुणसागरः स भवताम[व]ताद्यतिनायकः ॥३॥

तदीय-पट्ट-पर्वत-प्रचण्ड-चण्डदीधितिः
स्फुरद्यशाः सुधीधनः कृपापरः परोदयः ।
सुनव्य-भव्य-गद्य-पद्य-गीति-रीति-वेदकः
सुशुभचन्द्रसन्मुनिर्गणाधिपः पुनातु नः ॥४॥
वादविद्याविनोदेन रञ्जितानेकभूपतिः ।
सौमद्रः(शौभेन्दुः) मे श्रियं देयाद्वाचा तर्पित-सज्जनः ॥५॥

विजित-वादिगणो गतमत्सरः सकलसूरिगुणोदयसुन्दरः ।
शममयः सुकृतः सुविदावरः सुशुभचन्द्र गुरुर्गुणबंधुरः ॥६॥

दुर्व्याख्येयं मंदधीभिः पार्श्वकाव्य सुभाकरम ।
मत्वेति मतिमांस्तस्य पंजिकामकरोद्गणी ॥७॥

श्रीभूषणः स्वस्य गुरोः सुशिष्यः सूरिः स्वयं शास्त्रविदा मतश्च ।
तदा······च्छ्रीशुभचन्द्रदेवः चक्रे सुपंजी जिनकाव्यवाण्याः ॥८॥

वर्णिश्रीपालनामा मतिमतमहितो मार्गसर्गो निसर्गा–
दग्रस्त्रैविद्यविद्याविधिविकचसरो जातभास्वद्विवस्वान् ।
सार्थ ग्रंथार्थवेत्ता विशदमिदमरं पुस्तकं प्राक् सुपार्श्व–
काव्यस्य वै सुपञ्ज्याः लिखितललितवाक् वाग्मिना चोपजीव्यः॥९॥

पंजिकेयं चिरं चित्ते स्थेयात्सद्विदुपा स्थिरम् ।
कृता श्रीशुभचन्द्रेण श्रीभूषणसमाग्रहात ॥१०॥

श्रीपार्श्वपूज्यपादो गणिगणविनुतः श्रीप्रभाचन्द्रदेवः
सिद्धः श्रीवर्धमानो वरविजययशाः ज्ञानभूषोऽकलंकः ।
दिव्यश्रीभूपणोग्रवरविधिविदुप। शाश्वतश्रीशुभेन्दुः
श्रीपालः पातु पापात्प्रमितिपरिणतिर्वादिराजश्च युष्मान् ॥११॥

इति श्रीपार्श्वनाथ-काव्य- ंजिका समाप्ता ।

## ३५. श्रेणिकचरित्र ( भ० शुभचन्द्र )

**आदिभाग :—**

श्रीवर्द्धमानमानदं नौमि नानागुणाकरं ।
विशुद्धध्यानदीप्तार्चिर्हुतकर्मसमुच्चयं ॥१॥
बाल्येपि मुनि-संदेह-निर्नाशाद्यो जिनेश्वरः ।
सन्मतित्व समापन्नः सन्मत्याख्या ममाश्रितः ॥२॥
अमराहिफणामर्द्दोन्महावीरसुनामभाक् ।
बाल्ये यो बलता प्राप्तो वीराणां वीरता गतः ॥३॥
जरत्तृणमिवात्यंत राज्यं प्राज्य नरेश्वर( च नश्वरं ) ।
मत्वा त्यक्त्वाश्रितो दीक्षा यो वीरो विश्ववंदितः ॥४॥

**अन्तभाग :—**

जयतु जितविपक्षो मूलसंघः सुपक्षो
हरतु तिमिरभारं भारती-गच्छसारः (बाणः=प्रकाशः?) ।
नयतु सुगतमार्गं शासनं शुद्धवर्गं
जयतु च शुभचंद्रः कुंदकुंदो मुनीन्द्रः ॥१७॥
तदन्वये श्रीमुनिपद्मनंदी विभाति भव्याकर-पद्मनन्दी ।
शोभाधिशाली वरपुष्पदंतः सुकाति-संभिन्न-सुपुष्पदन्तः ॥१८॥
पुराण-काव्यार्थ विदावरत्व विकाशयन्मुक्तिविदावरत्वं ।
विभातु वीरः सकलाद्यकीर्तिः कृतापकेनौ(?) सकलाद्यकीर्तिः ॥१६॥
भुवनकीर्तियतिर्जयतादयमी भुवनपूरितकीर्तिचयः सदा ।
भुवनबिम्बजिनागमकारणो भव-नवाम्बुद-वातभरः परः ॥२०॥
तत्पट्टोदयपर्वते रविरभूद्भव्याम्बुज भासयन्
सन्नेत्रास्त्रहरं तमो विघटयन्नानाकरैर्भासुरः ।
भव्यानां सुगतश्च विग्रहमतः श्रीज्ञानभूषः सदा
चित्रं चंद्रकसंगतः शुभकरः श्रीवर्द्धमानोदयः ॥२१॥

जगति विजयकीर्तिः पुण्यमूर्तिः सुकीर्तिः
जयतु च यतिराजो भूमिपैः स्पृष्टपादः ।
नय-नलिन-हिमांशुर्ज्ञानभूषस्य पट्टे
विविध-परविवादि-क्ष्माधरे वज्रपातः ॥२२॥
तच्छिष्येण शुभेन्दुना शुभमनः श्रीज्ञानभावेन वै
पूत पुण्यपुराणमानुषभवं संसारविध्वंसकः ।
नो कीर्त्या व्यरचि प्रमोहवशतो जैने मते केवलं
नाहंकारवशात्कवित्तमदतः श्रीपद्मनाभेहितं ॥२३॥
इदं चरित्रं पठतः शिवं वै श्रोतुश्च पद्मेश्वरवत्पवित्रं ।
भविष्णु संसारसुखं नृदेवं संभुज्य सम्यक्त्वफलप्रदीपं ॥२४॥
चंद्राऽर्क-हेमगिरि-सागर-भू-विमानं
गंगानदीगमन सिद्धशिलाश्च लोके ।
तिष्ठंति यावदमितो वरमर्त्यशेवा( देवा ? )
स्तिष्ठतु कोविदमनोम्बुजमध्यभूताः ॥२५॥

इति श्रीश्रेणिकभवानुबद्ध-भविष्यत्पद्मनाभपुराणे पंचकल्याणवर्णनं नाम पञ्चदशः पर्वः ॥१५॥

## ३६. पाण्डवपुराण ( भ० शुभचन्द्र )

**आदिभाग :—**

सिद्धं सिद्धार्थसर्वस्वं सिद्धिदं सिद्धिसत्पदं ।
प्रमाण-नय-संसिद्ध सर्वज्ञ नौमि सिद्धये ॥१॥
वृषभ वृषभं भातं वृषभाकं वृषोन्नतं ।
जगत्सृष्टि-विधातारं वन्दे ब्रह्माणमादिमं ॥२॥
चन्द्राभं चन्द्रशोभाढ्यं चन्द्राच्यें चन्द्रसंस्तुतं ।
चन्द्रप्रभं सदाचन्द्रमीडे सच्चन्द्रलाछनं ॥३॥

**शान्तिं** शान्तेर्विधातारं सुशातं शातकिल्विषम् ।
तन्नमामि निरस्ताऽघं मृगाकं षोडशं जिनम् ॥४॥
**नेमिर्धर्मरथेनेमिः** शास्तु सशितशासनः ।
जग(जीया)ज्जगत्त्रयीनाथो निर्जितानिगसम्मदः ॥५॥
**वर्धमानो महावीरो वीरः सन्मति-नामभाक्** ।
स पातु भगवान् विश्व येन बाल्ये जितः स्मरः ॥६॥
**गौतमो** गौतमो गीष्पो गणेशो गणनायकः ।
गिरः गणनतो नित्य भातु भा-भारभूषितः ॥७॥
**युधिष्ठिरं** कर्मशत्रु-युधिस्थिर स्थिरात्मकं ।
दधे धर्मार्थसंसिद्धं मानसे महित मुदा ॥८॥
**भीमं** महामुनि **भीमं** पापारिक्षयकारणे ।
ससारासातशान्त्यर्थ दधे हृदि धृतोन्नति ॥९॥
**अर्जुनस्य** प्रसिद्धस्य विशुद्धस्य जितात्मनः ।
स्मरामि स्मरमुक्तस्य स्मररूपस्य सुस्मृतेः ॥१०॥
**नकुलो** वै सदा देवैः सेवितः शुद्धशासनः ।
**सहदेवो** बली कौल्यमलनाशी विभाति च ॥११॥
**भद्रबाहुर्महाभद्रो** महाबाहुर्महातपाः ।
स जीयात् सकलं येन श्रुतं ज्ञानं कलौ विदा ॥१२॥
**विशाखो** विश्रुता शाखा सुशाखो यस्य पातु मा ।
स भूतले मिलन्मौलिहस्तभूलोक-संस्तुतः ॥१३॥
**कुन्दकुन्दो** गणी येनोर्जयंतगिरिमस्तके ।
सोऽवतादादिता **ब्राह्मी** पाषाणघटिता कलौ ॥१४॥
**समन्तभद्रो** भद्रार्थो भातु भारतभूषणः ।
**देवागमेन** येनाऽत्र व्यक्तो देवागमः कृतः ॥१५॥
**पूज्यपादः** सदा पूज्य-पादः पूज्यैः पुनातु मा ।
व्याकरणार्णवो येन तीर्णो विस्तीर्णसद्गुणः ॥१६॥

अकलंकोऽकलंकः स कलौ कलयतु श्रुतं ।
पादेन ताडिता येन मायादेवी घटस्थिता ॥१७॥
जिनसेनो यतिर्जीयाज्जिनसेन कृतं वरं ।
पुराणपुरुषाख्यार्थं पुराणं येन धीमता ॥१८॥
गुणभद्रभदन्तोऽत्र भगवान् भातु भूतले ।
पुराणादौ प्रकाशार्थं येन सूर्यायितं लघु ॥१९॥
तत्पुराणार्थमालोक्य धृत्वा सारस्वतं श्रुतम् ।
मानसे पाण्डवानां हि पुराणं भारतं ब्रुवे ॥२०॥

× × × ×

वीरो विश्वगुणाश्रितो गुणगणा वीरं श्रिता सिद्धये ।
वीरेणैव विधीयते व्रतचयो वीराय स्वस्त्यस्तु च ॥
वीराद्वर्तत एव धर्मनिचयो वीरस्य सिद्धिर्वरा ।
वीरे याति जगत्त्रयं जितमदं संजायते निश्चितं ॥१५४॥

इति श्रीपाण्डवपुराणे महाभारतनाम्नि भट्टारकश्रीशुभचन्द्रप्रणीते ब्रह्मश्रीपाल-साहाय्यसापेक्षे श्रेणिकस्य जिनवन्दनोत्साहवर्णनं नाम प्रथमं पर्व ॥१॥

अन्तभाग :—

श्रीमूलसंघेऽजनि पद्मनन्दी तत्पट्टधारी सकलादिकीर्तिः ।
कीर्तिः कृता येन च मर्त्यलोके शास्त्रार्थकर्त्री सकला पवित्रा ॥१६७॥
भुवनकीर्तिरिभूद्भुवनाधिपैर्भुवनभासनचारुमतिः स्तुतः ।
वरतपश्चरणोद्यतमानसो भवभयाहिखगेट् क्षितिवत् क्षमी ॥१६८॥
चिद्रूपवेत्ता चतुरश्चिरन्तनश्चिद्भूषणश्चर्चितपादपद्मकः ।
सूरिश्च···न्द्रादिचयैश्चिनोतु वै चारित्रशुद्धिं खलु नः प्रसिद्धिदा ॥१६९॥
विजयकीर्तियतिर्मुदितात्मको जितमता(?)ऽन्यमतः सुगतैः स्तुतः ।
अवतु जैनमतः सुमतो मतो नृपतिभिर्भवतो भवतो विभुः ॥१७०॥
पट्टे तस्य गुणाम्बुधिर्व्रतधरो धीमान् गरीयान् वर

श्रीमच्छ्रीशुभचन्द्र एष विदितो वादीभसिंहो महान ॥१७१॥
तेनेदं चरितं विचारसुकरं चाकारि चञ्चद्रुचा।
पांडोः श्रीशुभसिद्धिसातजनक सिद्ध्यै सुताना मदा ॥१७२॥
चन्द्रनाथचरितं चरितार्थं पद्मनाभचरितं शुभचन्द्रं।
मन्मथस्य महिमानमतंद्रा जीवकस्य चरितं च चकार ॥१७३॥
चन्दनायाः कथा येन दृब्धा नान्दीश्वरी तथा।
आशाधरकृतार्चायाः वृत्तिः सद्वृत्तशालिनी ॥१७४॥
त्रिंशच्चतुर्विंशतिपूजनं यः सद्वृद्धसिद्धार्चनमाव्यधत्त।
सारस्वतीयार्चनमत्र शुद्धं चिंतामणीयार्चनमुच्चरिष्णुः ॥१७५॥
श्रीकर्मदाहविधिबंधुरसिद्धसेवां नानागुणौघ-गणनाथसमर्चनं च।
श्रीपार्श्वनाथवरकाव्यसुपंजिकां च यः संचकार शुभचन्द्रयतीन्द्रचन्द्रः१७६
उद्यापनमदीपिष्ट पल्योपमविधेश्च यः।
चारित्रशुद्धितपसश्च चतुस्त्रिद्विदशात्मनः ॥१७७॥
संशयिवदनविदारणमपशब्दसुखडनं परं तर्के।
सतत्त्वनिर्णयं च वरस्वरूपसंबोधनीं वृत्ति ॥१७८॥
अध्यात्मपद्यवृत्तिं सर्वार्थापूर्वसर्वतोभद्रम्।
योऽकृत सद्व्याकरणं चिन्तामणिनामधेयं च ॥१७९॥
कृता येनाऽङ्गप्रज्ञप्तिः सर्वाङ्गार्थ-प्ररूपिका।
स्तोत्राणि च पवित्राणि षड्वादाः श्रीजिनेशिना ॥१८०॥
तेन श्रीशुभचन्द्रदेवविदुषा सत्पाण्डवानां परं
दीप्यद्वंशविभूषणं शुभभरभ्राजिष्णुशोभाकरं।
शुभद्धारतनाम निर्मलगुणं सच्छब्दचिन्तामणि
पुष्यत्पुण्यपुराणमत्र सुकरं चाकारि प्रीत्या महत् ॥१८१॥
श्रीपालवर्णिना येनाकारि शास्त्रार्थसंग्रहे।
साहाय्यं स चिरं जीयाद्वरविद्या-विभूषणः ॥१८२॥

× × × ×

श्रीमद्विक्रमभूपतेर्द्विकहते स्पष्टाष्टसंख्ये शते
रम्येऽष्टाधिकवत्सरे(१६०८) सुखकरे भाद्रे द्वितीया-तिथौ।
श्रीमद्वाग्वर नीवृतीदमतुले श्रीशाकवाटे पुरे
श्रीमच्छ्रीपुरुधाम्नि च विरचितं स्थेयात्पुराणं चिरं ॥१८६॥

इति श्रीपाडवपुराणे भारतनाम्नि भट्टारक-श्रीशुभचन्द्र-प्रणीते ब्रह्म-श्रीपालसाहाय्यसापेक्षे पाडवोपसर्गसहन-केवलोत्पत्ति-मुक्ति-सर्वार्थसिद्धिगमन-श्रीनेमिनिर्वाणगमन-वर्णनं नाम पंचविंशतितमं पर्व ॥२५॥

## ३७. जीवंधरचरित्र ( भ० शुभचन्द्र )

**आदिभाग :—**

श्रीसन्मतिः सता कुर्यात्समीहितफलं परं।
येनाप्येत महामुक्तराजस्य वरवैभवः ॥१॥

( इसके बाद सिद्धादि परमेष्ठि-स्मरणके ४ पद्य हैं। )

गौतमं धर्मपारीणं पूज्यपादं प्रबोधकं।
समंतभद्रमानंदमकलंकं गुणाकरं ॥६॥
जिनसेनं शुभासीन ज्ञानभूषं परं गुरुं।
शुभचंद्रं प्रणम्योच्चैर्वंद्ये श्रीजीवकोद्भवं ॥७॥

इति श्रीजीवंधरस्वामिचरिते काष्ठांगार-वर्णनो नाम प्रथमोल्लासः।

**अन्तभाग :—**

ये(ते)षा धर्मकथासुयोगसुविधिज्ञानप्रमोदागमा-
चार-श्रीशुभचंद्र एष भविना मसारतः संभवं।
मार्गोदर्शनकोविदं हतहितं तामस्यभारं सदा
छिंद्याद्वाक्किरणैः कथंचिदतुलैः सर्वत्र सुख्यापिभिः ॥८५॥
श्रीमूलसंघो यतिमुख्यसेव्यः श्रीभारतीगच्छविशेषशोभः।
मिथ्यामतध्वान्त-विनाशदक्षो जीयाच्चिरं श्रीशुभचन्द्रभासी ॥८६॥

